ह्रीः

# दुर्लभ बौद्ध ग्रन्थ शोध पत्रिका

## 6

सम्पादक


प्रो० एस० रिनपोछे
योजना निदेशक

प्रो० व्रजवल्लभ द्विवेदी
उपनिदेशक






**दुर्लभ बौद्ध ग्रन्थ शोध योजना**

**केन्द्रीय उच्च तिब्बती शिक्षा संस्थान**

**सारनाथ, वाराणसी**

बुद्धाब्द २५३२ | कार्तिक पूर्णिमा | ख्रीस्ताब्द १९८८

# Dhīḥ

## A Review of rare buddhist texts

## 6

*Editors*


PROF. SAMDONG RINPOCHE
**Project Director**

PROF. VRAJVALLABH DWIVEDI
**Deputy Director**





भोट विद्या संस्थानम्

**RARE BUDDHIST TEXT PROJECT**
**Central Institute of Higher Tibetan Studies**
**SARNATH, VARANASI**

**B. E. 2532** **KĀRTIKA PŪRṆIMĀ** **C. E. 1988**

# धीः

## विषयानुक्रमणी





श्रीधर्मधातुमनिशं करुणावतारं
नागादिवासह्रदपङ्कजकर्णिकास्थम् ।
नैरञ्जनं निरुपमं खसमं महेशं
ज्योतिःस्वरूपमसमं प्रणताः स्म नित्यम् ।।

धर्मधातुस्तोत्रतः

# वसुधारानाम धारिणीस्तोत्रम्

[ यह स्तोत्र के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालयस्थ अप्रकाशित स्तोत्रसंग्रह ( ल० स० 3/360, फोटो प्रति सं० 21535 ) के ग्रन्थांक 109, पत्र 110–112 से लिया गया है। ]

ॐ नमो भगवत्यै आर्यश्रीवसुधारायै ॥

दिव्यरूपी सुरूपी च सौम्यरूपी बलप्रदा।
वसुधरी वसुधारी च वसुश्रीः श्रीकरी वरा ॥ 1 ॥

धरणी धारिणी धाता शरण्या भक्तवत्सला।
प्रज्ञापारमिता देवी प्रज्ञाश्रीर्बुद्धिवर्धिनी ॥ 2 ॥

विद्याधरी शिवा सूक्ष्मा शाला सर्वत्र मातृका।
तरुणी तारणी देवी विद्या दानेश्वरेश्वरी ॥ 3 ॥

भूषिता भूषमाणा च सर्वाभरणभूषिता।
दुर्दान्तित्रासिनी भीता उग्रा उग्रपराक्रमा ॥ 4 ॥

दानपारमिता देवी वर्षणी दिव्यरूपिणी।
निधानं सर्वमाङ्गल्या कीर्तिर्लक्ष्मीर्यशःशुभा ॥ 5 ॥

दहनी मालनी(रणी) चण्डी शबरी सर्वमात्रिकाः(का)।
कृतान्तशमनी रौद्री कौमारी विश्वरूपिणी ॥ 6 ॥

वीर्यपारमिता देवी जगदानन्दरोचनी।
तापसी उग्ररूपी च ऋद्धिसिद्धिबलप्रदा ॥ 7 ॥

धन्या पुण्या महाभागा अजिता जितविक्रमा।
जगदेकहिता विद्या संग्रामे तारिणी शुभा ॥ 8 ॥

क्षान्तिपारमिता देवी शीलिनी ध्यानध्यायिनी।
पद्मिनी पद्मधारी च पद्मप्रिया पद्मासनी ॥ 9 ॥

शुद्धरूपी महातेजा हेमवर्णा प्रभाकरी।
चिन्तामणी(णिः) महादेवी प्रज्ञापुस्तकधारिणी ॥ 10 ॥

निधानं कुटिमारूढि(ढा) धान्यागारधनप्रिया।
त्रैधातुका महा आदि दिव्याभरणभूषिणी ॥ 11 ॥

मातरी सर्वबुद्धानां रत्नधाते( त्वी )श्वरीश्वरी ।
शून्यता भावनी देवी भावाभावविवर्जिता ॥ 12 ॥
वैन्येय(नेय)किं न्यतिन्यता दिव्यक्लेशनिछे(षू)दिनी ।
भी(भे)दिनी सर्वमाराणां सप्तपातालक्षोभनी(भिणी)॥ 13 ॥
ब्राह्म(ब्रह्मा)णी वेदमाता च गुह्यरात्(ट्) गुह्यवासिनी ।
सरस्वती विशालाक्षी चतुर्ब्रह्मविहारिणी ॥ 14 ॥
ताथागती महारम्या वज्रिणी धर्मधारिणी ।
कर्मधाते(त्वी)श्वरी विद्या विश्वज्वालाभमण्डली ॥ 15 ॥
बोधनी सर्वसत्त्वानां बोध्यङ्गकृतशेखरी ।
ध्याना धीर्मुक्तिसम्पन्ना अद्वयो(या)द्वयभाविनी ॥ 16 ॥
सर्वार्थसाधनी भद्रा स्त्रीरूपामितविक्रमा ।
दर्शनी बुद्धमार्गाणां नष्टमार्गप्रदर्शनी ॥ 17 ॥
वागीश्वरी महाशान्तिर्गोप्ति(प्त्री) धात्री धनप्रदा ।
स्त्रीदरा धारणी सिद्धा योगिनी योगजेश्वरी ॥ 18 ॥
मनोहरी महाकान्तिः सौभाग्ये प्रियदर्शिनी ।
सार्थवाहकृपादृष्टिः सर्वताथागतात्मिका ॥ 19 ॥
नमस्तेऽस्तु महादेवी सर्वमन्त्रार्थदायिनी ।
नमस्ते दिव्यरूपी च वसुधारा नमोऽस्तु ते ॥ 20 ॥
अष्टोत्तरशतं नाम त्रिकालं यः पठेन्नरः ।
प्राप्नोति नियतं सिद्धिमीप्सितार्थमनोरथान् ॥ 21 ॥
यदज्ञानात् कृतं पापमानन्तर्यात् सुदारुणम् ।
तत्सर्वं क्षपयत्याशु स्मरणादेव भद्रकम् ॥ 22 ॥
अथवा शीलसम्पन्नः सप्तजातिस्मरो भवेत् ।
प्रियश्चादेयवाक्येन रूपवान् प्रियदर्शनी( नः ) ॥ 23 ॥
विप्रक्षत्रियकुलेषु आदेयमुपजायते ।
अन्ते भूमीश्वरं प्राप्य पश्चात् प्राप्तसुखावती ॥ 24 ॥

इति वसुधारानाम धारणीस्तोत्रं सम्यक्सम्बुद्धभाषितम् ॥

—:o:—

# पीठस्तवः

[ यह स्तोत्र केन्द्रीय उच्च तिब्बती शिक्षा संस्थान के शान्तरक्षित ग्रन्थालयस्थ अप्रकाशित स्तोत्र-संग्रह ( फोटो प्रति सं० 21535 ) के ग्रन्थांक 110, पत्र सं० 112–115, से लिया गया है । ]

ब्रह्माणी तत्त्वरूपा विविधघनरवा घोरचण्डी च रौद्री
कौमारी कीर्तिकामा पिबति मधुमदं वैष्णवी गायमाना ।
वाराही वादयन्ती पटुतरपटहान् नृत्यमाना तथैन्द्री
चामुण्डा चापि लक्ष्मीर्हरगणसहिता मातरो वः पुनन्तु ॥ 1 ॥

गणपतिं च हेरम्बं विघ्नराजं विनायकम् ।
देवपुत्रं महावीर्यं महाबलपराक्रमम् ॥
महोदरं महाकायमेकदन्तं गजाननम् ।
श्वेतवर्णं महादीप्तिं त्रिनेत्रं गणनायकम् ॥
अक्षमाला [ च ] वरदं दक्षिणकरसंस्थितम् ।
परशुर्मुण्डपात्रं च वामहस्तविधारणम् ।
नानापुष्परतं देवं नानागन्धावलेपनम् ।
नागयज्ञोपवीताङ्गं नानाविघ्नविनाशनम् ॥
देवासुरमनुष्यैश्च सिद्धगन्धर्वकिन्नरैः ।
पूजितं विघ्नहन्तारं मूषकाटं नमाम्यहम् ॥ 2 ॥

ब्रह्माणी ब्रह्मसावित्री ब्रह्मतत्त्वविवेदिनी ।
चतुर्भुजा चतुर्वक्त्रा चतुर्देवपरायणा ॥
चतुर्देशे चिरं व्यापी चतुर्युगोपकारिणी ।
हंसयुक्तविमानस्था सौम्यरूपा पितामही ॥
पुस्तकं पुष्पमालां च वरदाभयधारिणी ।
पीतपुष्परता देवी पीताङ्गा पीतसन्निभा ॥
पीतोपहारसंयुक्ता पीतगन्धानुलेपिनी ।

उदुम्बरद्रुमस्था च प्रयागक्षेत्रवासिनी ॥
पूर्वपीठे स्थिता नित्यं ब्रह्मशक्तिर्नमोऽस्तु ते ॥ 3 ॥

माहेश्वरी महादेवी मोहमायानिरंज( कृंत )नी ।
महावृषसमारूढा महाहुंकारनादिनी ।
हेममुक्त(क्ता)निभदेहा कपालशशिशेखरा ।
त्रिलोचना त्रिशूली च अक्षसूत्रकमण्डलू ॥
नानालङ्कारसर्वाङ्गी दक्षिणेन वरप्रदा ।
सृष्टिस्थितिविनाशानां सर्वथापीश्वरेश्वरी ॥
श्वेतपुष्परता देवी श्वेतगन्धानुलेपिनी ।
श्वेतवस्त्रपरीधाना मुद्राभरणभूषिता ॥
वाराणस्यां महाक्षेत्रे तार( ल )वृक्षनिवासिनी ।
उत्तरे संस्थिता पीठे माहेश्वरी नमोऽस्तु ते ॥ 4 ॥

बालभावे महारौद्री कौमारी रक्तलोचनी ।
रक्तवर्णधरा देवी सिन्दूरारुणविग्रहा ॥
चतुर्भुजा शक्तिसूत्रसिद्धपात्रधरा शुभा ।
कौमारी परमा शक्तिः मयूरवरवाहिनी ॥
रक्तवस्त्रपरीधाना रक्तमांसावसायिनी ।
कोलापुरमहाक्षेत्रे वटवृक्षनिवासिनी ॥
अग्निपीठस्थिता नित्यं कौमारी ते नमो नमः ॥ 5 ॥

वैष्णवी विष्णुमाया च दैत्यदुर्दान्तनाशिनी ।
हरितश्यामवर्णाङ्गी गरुडोपरि संस्थिता ॥
शङ्खचक्रगदाहस्ता चतुर्बाहुविभूषिता ।
रक्तज्वाला महाक्रीडा नानाभरणभूषिता ॥
हरितपुष्पगन्धा च हरितवस्त्रधारिणी ।
अट्टहासे महाक्षेत्रे कदम्बवृक्षवासिनी ॥
स्वर्गे मर्त्ये च पाताले स्थितिरूपेण संस्थिता ।
तिष्ठन्ती पीठनैर्ऋत्ये नारायणी नमोऽस्तु ते ॥ 6 ॥

वाराही घोररक्ताङ्गी रक्तकेशी महोदरी ।
दंष्ट्रावादिनी गम्भीरा रक्तनेत्रा त्रिलोचनी ॥

कपालमालिका माला विचित्रपुष्पशोभिता ।
महाशूकसमारूढ़ा ज्वलिताग्निसमप्रभा ॥

अङ्कुशकर्तिकादण्डहाडाभरणभूषिता ।
त्रिनेत्रा ज्वलितदेहा च दुष्टदर्पविनाशिनी ॥

जयन्तीक्षेत्रसंस्थाना निम्बवृक्षसमाश्रिता ।
याम्यपीठे स्थिता नित्यं कोलरूपी नमोऽस्तु ते ॥ 7 ॥

शक्रेश्वरी सहस्राक्षी कुङ्कुमारुणविग्रहा ।
सुरेश्वरी देवदेवी सर्वालङ्कारभूषिता ॥

चतुर्भुजा विशालाक्षी छत्रघण्टाविधारणी ।
महावज्रधरा देवी स्थिता चैरावते गजे ॥

नानापुष्परता देवी नानारत्नविभूषिणी ।
नानागन्धविलिप्ताङ्गी नानावस्त्रविराजिनी ॥

चीरक्षेत्रे महाक्षेत्रे करञ्जवृक्षसंस्थिता ।
नागपीठस्थिता नित्यं शक्रेश्वरी नमोऽस्तु ते ॥ 8 ॥

चामुण्डा चण्डिका चण्डी प्रचण्डसुरसुन्दरी ।
चण्डाट्टहासा चण्डाक्षी प्रचण्डचण्डनाशिनी ॥

दंष्ट्राकराला रक्ताङ्गी कपिलकेशी महोदरी ।
कृषा(पा)णी भीषणी रौद्री जिह्वाललनभीषणा ॥

महाप्रेतासनारूढा भुजाष्टकसुशोभिनी ।
असिचर्मयुता हस्तैः डमरुखट्वाङ्गधारिणी ॥

कर्तिकपालहस्ता च वरदाभयभूषिता ।
हाडालङ्कारसर्वाङ्गी अरिप्रत्यसुदा प्रिया ॥

सहस्रसूर्यसंकाशा रोमकूपं प्रति प्रति ।
ज्वालामालाकुला देहे [सूर्य]कोटिसमप्रभा ॥

भूतवेतालडाकिन्यः परिवारश्च राक्षसाः ।
एकमक्षमहाक्षेत्रे अश्वत्थवृक्षवासिनी ॥
पीठे मरुतसंस्थाने चामुण्डायै नमोऽस्तु ते ॥ 9 ॥

महालक्ष्मीर्महादेवी भोगाढ्या गुणसुन्दरी ।
वैदूर्यपादुकारूढा सिंहासनस्थिता सुधीः ॥
चतुर्भुजा विशालाक्षी खड्गखेटकधारिणी ।
पात्रबिन्दुधरा देवी हार्धयुक्( हारार्धयुग )कुण्डली ॥
रत्नखचितसर्वाङ्गी चूडामणिविभूषिता ।
विचित्रपुष्परत्ना च वस्त्रगन्धानुलेपना ॥
त्रैलोक्यव्यापिनी देवी सर्वस्था सचराचरा ।
सिद्धगन्धर्वनमिता विद्याधरसुरार्चिता ॥
देवीकोटमहाक्षेत्रे प्लक्षसंस्था वरा बला ।
ईशानपीठसंस्थाना महालक्ष्मीः नमोऽस्तु ते ॥ 10 ॥

जननी सर्वबुद्धानां सर्वसन्तोषकारिणी ।
त्वमेव सर्वरूपा च त्वमेव विश्वरूपिणी ॥
भैरवं भीषणं रौद्रं घोरगम्भीररूपिणम् ।
निरञ्जननिभं देहं सर्वकाममहोत्सवम् ॥
नानाभुजसमाकीर्णा नानावस्त्रधरा शुभा ।
बभ्रुरर्धशिरोरुहा दावाग्निसमतेजसा ॥
त्रिलोचना महातेजा अग्निसूर्यसमप्रभा ।
त्रिशूलं मुण्डं खट्वाङ्गं डमरुं तर्जनीं ध्वजम् ॥
प्रज्ञां तत्पुस्तकं चैव खड्गचर्मधरा शुभा ।
पाशाङ्कुशधरं देवं वज्रसूचीमहाधरम् ॥
कपालकर्तिकं चक्रं गजचर्मावगुण्ठितम् ।
दंष्ट्राकरालवदनं व्याघ्रचर्मकटीवृतम् ॥
सालङ्कारेण सर्वाङ्गं नरास्थिपुष्पशोभितम् ।
शीर्षमालाधरा देवी कापालिकोटरं शुभम् ॥

चूडामणि महातेजं कपालं चन्द्रभूषितम् ।
महाप्रेतासनं नित्यं नीयमाना सदा प्रिया ॥

सहस्रसूर्यसंकाशा छत्रबिन्दुसमन्विता ।
चतुष्पीठस्थिता नित्यम् अष्टक्षेत्रनिवासिनी ॥
अष्टमूर्तिस्थिता देवी अष्टकयोगिनीप्रिया ।
भद्रपीठे स्थिता नित्यं भद्रकालीसमावृता ॥
भद्रकारणकर्ता त्वं वीरभद्र नमोऽस्तु ते ।
असिताङ्गो रुरुश्चैव चण्डोऽथ क्रोधभैरवः ॥
उन्मत्तभैरवश्चैव कपाली भीषणस्तथा ।
संहारभैरवश्चाष्टभैरवाय नमोऽस्तु ते ॥

स्वस्थाना स्वाधिकारा च स्वस्वरूपा स्ववीरका ।
स्वस्वच्छवृक्षतानं न दिव्याक्षं चैव भूमिगाः ॥
दशदिक्क्षेत्रपालं च क्षेत्राणि च चतुर्दश ।
पञ्चाशक्षेत्रपालं च क्षेत्रपाल नमोऽस्तु ते ॥

नाथनाथ महानाथ आदिनाथ महामते ।
श्रीनाथ सिद्धनाथ मीननाथ नमोऽस्तु ते ॥
क्षेत्रनाथ पीठनाथ द्वीपनाथ महात्मने ।
प्रेतनाथ भूतनाथ बढनाथ नमोऽस्तु ते ॥

त्रिनाथं नवनाथं च षोडशनाथमुत्तमम् ।
सप्तविंशतिपञ्चाशच्चौरासीति नमोऽस्तु ते ॥
सर्वेषां नाथसिद्धानां मतं चक्षुस्त्वमव्ययम् ।
पोतसद्म तथा वीरस्ततः सर्वं नमोऽस्तु ते ॥

एकवारं द्विवारं च त्रिवारं यः पठेन्नरः ।
शतमावर्तयेद् येन प्राप्नोति फलमुत्तमम् ॥
नाशयेच्छोकचिन्तादि नाशयेद् विघ्नमण्डलम् ।
नाशयेद् रोगकलहान् नाशयेद् दुःखदुष्करम् ॥

नाशयेद् भयदारिद्रचं नाशयेद् रिपुजं भयम् ।
नाशयेदग्निचौरादि नाशयेद् राजकोपजम् ॥

नाशयेद् विग्रहं घोरं परकृताभिचारकम् ।
नाशयेद् द्वेषरागादि नाशयेत् सर्वपातकम् ॥
आयुरारोग्यमैश्वर्यं धनधान्यप्रवर्धनम् ।
धर्मार्थकाममोक्षाणां यशःसौभाग्यवर्धनम् ॥

ऋद्धि सिद्धि श्रियं लक्ष्मीं विद्यां ज्ञानं सुतादि च ।
बुद्धि प्रजां सुमित्राणि वर्धयेच्च दिने दिने ॥
नाकाले मरणं चैव उत्पातं नाशयेत् सदा ।
सर्वे रोगाः प्रशाम्यन्ति दीर्घमायुरवाप्यते ॥

॥ इति पीठस्तवस्तोत्रं समाप्तम् ॥

—: o :—

# दुर्लभ ग्रन्थ परिचय

—जनार्दन पाण्डेय—

[ 'धीः' में इस शीर्षक से अब तक 6 संग्रहों सहित 35 दुर्लभ ग्रन्थों का परिचय दिया जा चुका है। प्रस्तुत अंक में निम्नांकित 10 ग्रन्थों का परिचय दिया जा रहा है—

36. प्रकीर्णकचैत्यलक्षण ( स्तूपकारिका )

37. स्तूपकारिकाविवेचन

38. साधनसमुच्चय

39. योगराजतन्त्र

40. गुह्यसमाज-अपरार्ध

41. परमगम्भीरश्रीवज्रयोगिनीमन्त्रार्थतत्त्वनिर्देश

42. योगसिद्धान्तबुद्धसिद्धितन्त्र

43. मण्डलसाधनविधि

44. सिद्धैकवीरप्रतिभेदान्तर

45. धारणीहृदयसंग्रह

इनमें साधनसमुच्चय के अन्तर्गत 7 और धारणीहृदयसंग्रह के अन्तर्गत 5 नवीन ग्रन्थों का विवरण दिया गया है। ]

## 36. प्रकीर्णकचैत्यलक्षणम् ( स्तूपलक्षणकारिका )

**ग्रन्थ**—स्तूपलक्षणकारिका

**ग्रन्थकार**—आचार्य भद्रव्यूह

**ल० सं०**—3/366

**पत्र सं०**—3 ( 1–3 ), **पंक्ति प्र० प०**—14, **अक्षर प्र० पं०**—45

**आधार**—ताड़पत्र, **लिपि**–नेवारी ( भुजिमोल ), **पूर्ण**।

**प्रारम्भ**

नमो बुद्धाय ॥

प्रकीर्णकाविनये प्रोक्तं यल्लोकोत्तरवादिना।

यच्चान्येषां निकायानां सूत्रादौ स्तूपलक्षणम् ॥

दर्शितं लोकनाथेन स्तोकं स्तोकं क्वचित् क्वचित् ।
सर्वं तत् स[ ञ्चयेने ]ह भद्रव्यूहेन कथ्यते ॥

**अन्त**

स्मृतिधर्मप्रविचयवीर्यं समाधिसंबोध्यङ्गानि चत्वारो लोकपालाः । आर्याष्टाङ्गमार्गं यष्टिः । क्षीणाश्रवा बलानि त्रीणि चावनिकानि । स्मृत्युपस्थानानि त्रयोदश छत्रावल्यः । उष्णीषो महाकरुणाविशुद्धिः । विमलो निर्माणधातुः सितातपत्रम् । संवृतिसत्यपरमार्थसत्यौ चन्द्रसूर्यौ । आर्यरत्नमिदं गाथाद्वयम् । सत्त्वविषयात्मगतं घण्टाद्वयम् । सर्वकारक्षत…… छत्रम् । अलाभात्मिका च भाविमुक्तिध्वंजम् । इत्यपि स भगवानित्यादि यशःपताका ।

**पुष्पिका**

प्रकीर्णकचैत्यलक्षणं समाप्तम् ।
आर्यलोकोत्तरवादिनो यत्कृतिराचार्यभद्रव्यूहस्य ।

**विवरण**—अगले ग्रन्थ के साथ दिया है ।

**विषयनिर्देश**—इसमें स्तूपादिनिर्माण की प्रक्रिया बताई गई है और उसमें बनाये गये स्वरूपों की आध्यात्मिक दृष्टि से व्याख्या की गई है ।

## 37. स्तूपलक्षणकारिकाविवेचनम्

**ग्रन्थ**—स्तूपलक्षणकारिकाविवेचन
**ग्रन्थकार**— ×
**ल० सं०**—3/366
**पत्र सं०**—5 ( 3–7 ), **पंक्ति प्र० प०**—14, **अक्षर प्र० पं०**—45
**आधार**—ताड़पत्र, **लिपि**—नेवारी ( भुजिमोल ), **पूर्ण** ।

**प्रारम्भ**

निर्जिताशेषदोषा ये गुणाल्लोकपरागताः ।
जयन्ति जिनजन्मानो भगवन्तस्तथागताः ॥
स्तूपं कृत्वोपदेशेन येनार्थो जगतः कृतः ।
तमहं शिरसा वन्दे भद्रव्यूहाह्वयं यतिम् ॥

**अन्त**

.........गुणवति प्रदेशे प्रस(श)स्ते मनोहरे, स्वहस्ते वा कर्महस्तेन वा । तथा स्ववुद्धया विकल्पे कार्ये । यतः प्रोक्तं यथा श्यामो मनो भवेत् तथा कुर्यादिति । आगमेऽस्मिन्निति ।

स्तूपलक्षणशास्त्रस्य वस्तुमात्रोपदर्शनात् ।
यन्मयोपार्जितं पुण्यं तेनास्तु स्तूपभाजनम् ॥ इति ।

**पुष्पिका**

स्तूपलक्षणकारिकाविवेचनं समाप्तः( प्तम् ) ।

**विवरण**

ये दोनों ग्रन्थ राष्ट्रीय अभिलेखालय काठमाण्डू ( नेपाल ) से फोटो किये हुए के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय से उपलब्ध हुए हैं, जिसके आधार पर यह विवरण तैयार किया गया है ।

नेपाल दरबार ग्रन्थालय सूचीपत्र ( सप्तम भाग, खण्ड 3, पृष्ठ 128 ) में इसका परिचय "स्तूपलक्षणकारिकाविवेचनम्, ग्रन्थकारः—आचार्यभद्रव्यूहः" दिया गया है । वस्तुतः ये दो भिन्न मातृकाएँ हैं, जो एक साथ लिखी गई हैं । पत्र **1** से **3** तक 'स्तूपलक्षणकारिका' है, जिसके रचयिता आचार्य भद्रव्यूह हैं । पत्र 3 से 7 तक उसकी टीका 'विवेचन' है, जिसके कर्ता कोई भिन्न व्यक्ति हैं । क्योंकि उन्होंने ग्रन्थ के प्रारम्भ में 'तमहं शिरसा वन्दे भद्रव्यूहाह्वयं यतिम्' कहकर भद्रव्यूह को प्रणाम किया है ।

## 38. साधनसमुच्चयः

**ग्रन्थ**—साधनसमुच्चय
**ग्रन्थकार**—अनेक
**संख्या**— MBB II–43
**पत्रसंख्या**—186, **पंक्ति प्र० प०–16, अक्षर प्र० पं०–16**
**आधार**—नेपाली कागज, **लिपि**–देवनागरी, **पूर्ण** ।

**प्रारम्भ**

( प्रथमपत्र का क. भाग बीच-बीच में खण्डित हो गया है । 1. ख—)

हेमाभशूकरारूढां तप्तकाञ्चनभास्वराम् ।
लीलयोर्ध्वस्थितां चन्द्रबिम्बाम्भोरुहसंश्रयाम् ॥

धोः

अशोकवृक्षशाखाग्रविलग्नां वामपाणिना।
बिभ्रतीं वरदाकारदक्षिणकरपल्लवाम्॥
दीप्तरत्नोपशोभेन मौलिना बुद्धशेखराम्।
श्वेतवस्त्रां नमस्यामि मारीचीमभयप्रदाम्॥
आर्यमारीचीधारणीपाठोपदेशः॥ 1॥

**अन्त**

दक्षिणे सूर्यदेव वारुण्यां दिशि हिरण्यगर्भ........नन्दकं वामे चन्द्रं चामरैर्वीजयन्तं
कमलदलसमन्ताद् बाह्यतो लोकपालान्
सकलविधिसमेतान् पूर्णकुम्भान् क्रमेण।
अखिल........समाजं कायवज्राधिपं वा
इति विहितविधानं सर्वकृत्यं विदध्यात्॥
तेषां नागराजानां पूर्ववत् पूजा॥ इति नागप्रतिमार्चना॥

**पुष्पिका**

इति साधनसमुच्चये........[1] साधनं नाम........[2] तमः पटलः।

**विवरण**

इस ग्रन्थ की मूल मातृका राष्ट्रीय अभिलेखागार नेपाल में है, जिसका माइक्रोफिश इंडियन एडवांस स्टडी आफ वर्ल्ड रिलीजन, न्यूयार्क द्वारा के० उ० ति० शि० सं, के शान्तरक्षित ग्रन्थालय में उपलब्ध है। इसी के आधार पर विवरण दिया जा रहा है।

इस ग्रन्थ में 167 साधनों का संग्रह किया गया है। इनमें से प्रायः सभी गायकवाड़ ओ० सीरीज से प्रकाशित 'साधनमाला' में प्रकाशित हो चुके हैं। जो साधन उसमें नहीं आये हैं, उनका विवरण नीचे दिया जा रहा है। यहाँ यह ज्ञातव्य है कि साधनमाला में साधनों की समाप्ति पर केवल साधन का नाम दिया गया है। किन्तु साधनसमुच्चय में संग्रह की क्रमसंख्या के अनुसार उसे एक पटल की संज्ञा दी गई है।

## ( क ) भगवतोक्तं महाभैरवसाधनम्

**ग्रन्थ**—महाभैरवसाधन

**पत्र संख्या**—4 ( 67–70 ), पूर्ण।

1. यहाँ पर प्रत्येक पटल में साधन का नाम है। 2. यहाँ पटल की संख्या दी गयी है।

**प्रारम्भ**

महाभैरवसाधनं वक्ष्ये। ॐ नमो महाभैरवाय।
अतः परं प्रवक्ष्यामि परसैन्यप्रमारणम्।
आगमिष्यति यत्समीपे दुर्वारं परसैनिकम्॥
तदैतत् साधयेद् देवि षड्दशभुजभैरवम्।
भैरवं च महाघोरं परसैन्यप्रमर्दकम्॥
आनन्देन स्थितं वीरं व्योमाकारस्वरूपकम्।
चतुर्मुखधरं कायं हूंकारबीजसन्निभम्॥

**अन्त**

नानानिधानघनकुण्डलहेमरौप्यान् पत्रादिकद्रविणजातनिबद्धचित्रान्।
वित्तं च सर्वमखिलं परिभूय भुक्ते मन्त्रान्वितस्य तदेव परिभावयेयम्॥
राज्यं नृपाच्चक्रवर्तिकाच्च फलं च वृक्षात्तोयं नदीनदसमुद्रगतं विकृष्य।
मन्त्रान्वितः पिबति खादति मन्त्रपूतः मन्त्रं विना नहि जनाः खलु भोगसिद्धिः॥

**पुष्पिका**

इति साधनसमुच्चये महाकालकल्पे भगवतोक्तं महाभैरवसाधनं
चौ(षट्)सप्ततितमः पटलः॥ 76॥

## (ख) वज्रभैरव साधनम्

**ग्रन्थ—**वज्रभैरवसाधन
**पत्र सं० —**4( 51– 54), **पूर्ण।**

**प्रारम्भ**

ॐ नमः श्रीवज्रभैरवाय।

भावयेद् भगमध्यपंकारेण वायुमण्डलं धूमाकारं विचिन्तयेत्। तस्योपरि इन्दुमध्ये धीःकार-परिणतं मञ्जुघोषरूपमात्मानं विचिन्त्य तद्धृदि अकारेण सूर्यमण्डलं ध्यात्वा ततः सूर्य-मण्डलाद्रश्मि निश्चार्य विविधपूजां कृत्वा तदुपरि हूङ्कारं पञ्चरश्मिसंयुक्तं ध्यात्वा तत्प्रावृतं श्रीवज्रभैरवम्।

**अन्त**

भूरभिन्नपुरुषं वटवृक्षस्योद्बद्धपुरुषं कुन्तभिन्नं च अनेककाकपंछीस्वनयुतं हाहाकारसमाकुलं एवंविधं भावयेद् योगी सर्वक्रूरकर्मसिद्धिकरम्। इत्याह भगवान्।

मन्त्रः—ॐ आः हूँ ह्रीं श्रीं ह्स्ष्म्र्ं ह्सौं ह्स्क्ष्मल्व्र् यूँ
ॐ आः हूँ मेघसम्बराय हूँ फट् स्वाहा ।

**पुष्पिका**

इति साधनसमुच्चये सम्पुटोद्भवतन्त्रोक्तवज्रभैरवसाधनमेकोनषष्टितमः पटलः ॥ 59 ॥

## (ग) वारिहिरण्यसप्तकम्

**ग्रन्थ**—वारिहिरण्यसप्तक ।

**पत्र सं०**—10 ( 170–179 ), पूर्ण ।

**प्रारम्भ**

ॐ नमः सुखावतीश्वराय

श्रीज्ञानपुण्यसरसीरसनाप्रजाता ज्योत्स्नावलीवदमृतप्रसरानुबन्धाः ।
चेतोऽखिलप्रचयतामु····प्रजानां लोकेश्वरस्य करुणार्द्रगिरो जयन्तु ॥

श्रीवज्रसत्त्वमुखनिर्गतषल्यचोदकल्पागमादिशतबन्धगुणप्रकारम् ।
लोके पवित्रमिह सर्वजगत्प्रतिष्ठं सत्कृत्य किञ्चिदिह वारिविधिं वदामि ॥

आचार्यशिल्पियजमानजनैर्यथावदादौ निरूप्य जलदानविधिर्विधेयः ।
स्थानोरगेन्द्ररसवर्णसुगन्धिभावदिक्पाललोककुललभ्यतयाऽम्बुजातिः ॥

**अन्त**

रोगातुरं सत्त्वमिमं निरीक्ष्य पत्राङ्गमूलाफलमिङ्गितानि ।
भैषज्यजातानि ददाति योऽत्र दीर्घायुरारोग्यपदं प्रयाति ॥ 7 ॥ फलसप्तकम् ॥ 16 ॥

विधाय न्यूनातिविशेषकीर्तनं समासतो वारिहिरण्यसप्तकम् ।
यदत्र पुण्यं जगतां प्रयातु तद् हिरण्यवल्लीलमिवोपयोगिनाम् ॥

हिरण्यसप्तकं नाम वारि समाप्तमिति ॥

**पुष्पिका**

इति साधनसमुच्चये वारिनिदान–वारिजाति–वारिदोष–गुण–लिङ्ग–वारिप्रारम्भ–प्रणाल-प्रमाण–द्रोण–खात–वारिदिग्धारा–नागमण्डल्य–नागमन्त्र–आराम–फल–तेषां साधनं पञ्च-( षट् )षष्ट्यधिकशततमः पटलः ॥ 166 ॥

**वक्तव्य**

यह महत्त्वपूर्ण ग्रन्थ है। इसमें पहले जलदान की प्रशंसा की गई है। फिर कूप, बावड़ी, तालाब आदि बनाने के लिये जहाँ सुविधा से जल प्राप्त हो, ऐसी भूमि के अन्वेषण का प्रकार ( निदानसप्तक ), जल की जातियाँ, उसके दोष, गुण, पहिचान, जल निकल आने पर कर्तव्य, नालियाँ बनाने की विधि, कितना जल होगा इसकी पहिचान, द्रोण ( झील या सरोवर ), खात ( बावड़ी ) का निर्माण प्रकार, जल की धारा का मुख किस ओर होने पर क्या फल होगा, जल के अधिष्ठाता नागदेवता का मण्डल, नाग के मन्त्र, जल से होने वाली सुविधाएँ और अन्त में फलस्तुति, इन 16 विषयों में, प्रत्येक विषय का 7-7 पद्यों द्वारा वर्णन किया है। निदानसप्तकम्, जातिसप्तकम्; दोषसप्तकम्, गुणसप्तकम् आदि। इसीलिये ग्रन्थ का नाम '**वारिहिरण्यसप्तकम्**' रखा है।

ग्रन्थकार ने प्रारम्भ में ही आचार्य ( जिसकी देखरेख में जलग्रहण कार्य सम्पन्न होगा ), यजमान ( जो इस कार्य का मुख्य साधक होगा ) और शिल्पी ( जो कारीगर इसमें कार्य करेंगे )—इन सभी के लिये इसकी उपयोगिता सूचित की है।

## (घ) नागार्चनविधिः

**ग्रन्थ**—नागार्चनविधि

**पत्र संख्या**—7 (179-185), पूर्ण।

**प्रारम्भ**

ॐ नमो नागेभ्यः। नवनागादि० नागगणानां समाधिः।

ॐ समन्वाहरन्निमां रत्नाभां नागा अशेषदिक्षु संस्थिताः।

नमो वैरोचनरूपं वरुणाख्यं जलप्रदम्।
वरदप्रवरं वन्दे सर्वनागसमन्वितम्॥

सप्तफणाधरं नागं प्रवररूपधारकम्।
सितवर्णं महातेजं वरदमुद्राधरं परम्॥

फणिप्रतिधरं रत्नं मकरासनगामिकम्।
नागपाशधरं नागं नमो वैरोचनं सदा॥

॥ इति वन्दना॥

**अन्त**

कमलदलसमन्तात् ···· ···· ···· लोकपालान्
सकलविधिसमेतान् पूर्णकुम्भान् क्रमेण ।
अखिलजिनसमाजं कायवज्राधिपं वा
इति विहितविधानं सर्वकृत्यं विदध्यात् ॥
तेषां नागानां पूर्ववत् पूजा ।

**पुष्पिका**

**इति नागप्रतिमार्चनम्**

**वक्तव्य**

इस ग्रन्थ में वर्णित साधना का सम्बन्ध पूर्वोक्त जलग्रहण विधि से ही है। जल के अन्वेषण और सतत प्राप्ति के लिये ही नागपाशधारी वरुण ( वैरोचन ) की इसमें आराधना की गई है। अन्तिम पत्र अस्पष्ट है, अन्य साधनों की भाँति इसमें अन्तिम पुष्पिका "इति साधन-समुच्चये" आदि नहीं है, संभवतः संग्रहकर्ता या लिपिक इतना ही लिख पाया है।

## 39. योगराजतन्त्र

**ग्रन्थ**—योगराजतन्त्र
**संख्या**—MBB III —23
**पत्र सं०**—1–20, **पंक्ति प्र० प०**–10, **अक्षर प्र० पं०**–40
**आधार**—नेपाली कागज, **लिपि**—नेवारी, **पूर्ण**।

**प्रारम्भ**

ॐ नमः श्रीहेरुकाय। श्रीवज्रवाराहीयोगराजोत्तमोत्तममाह—
अथातः संप्रवक्ष्यामि योगराजोत्तमोत्तमम् ।
षट्चक्रस्य यथायोगं योगतन्त्राद्विनिर्गतम् ॥

**अन्त**

येन विज्ञातमात्रेण पृथ्वीसागरमेखला ।
वशमायान्ति ते क्षिप्रं सदेवासुरमानुषाः ॥

**पुष्पिका**

इति श्रीहेरुकाद्यवज्रवाराहीयोगराजोत्तमोत्तमपरमरहस्यं समाप्तम् ॥

**विवरण**

इसकी माइक्रोफिश प्लेट एडवांस स्टडी आफ वर्ल्ड रिलीजन, न्यूयार्क से के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में प्राप्त हुई है।

**वक्तव्य**

यह ग्रन्थ "वज्रवाराहीपरमरहस्यतन्त्र" नामक ग्रन्थ से अक्षरशः मिलता है, जिसका विवरण 'धीः' अंक 4, पृष्ठ 7–10 में दिया जा चुका है।

## 40. गुह्यसमाज-परार्धः

**ग्रन्थ**—गुह्यसमाज परार्ध (तथागतगुह्यक, तथागतगुह्यसमाधि)

**संख्या**—MBB. I–85

**पत्रसंख्या**—1–125, **पंक्ति प्र० प०**–20, अक्षर प्र. पं.–35

**आधार**—नेपाली कागज, **लिपि**–नेवारी, **पूर्ण**।

**प्रारम्भ**

ॐ नमः श्रीवज्रसत्त्वाय ॥

एवं मया श्रुतमेकस्मिन् समये भगवान् सर्वतथागतकायवाक्चित्तवज्रयोषिद्भगेषु विजहार। अनभिलाप्यानभिलाप्यबुद्धबोधिसत्त्वानां मध्ये वज्रगर्भमवलोक्य स्मितमकार्षीत्। समनन्तरस्मिन् वज्रगर्भ उत्थायासनादेकांशमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य कृताञ्जलिपुटो भूत्वा भगवन्तमेतदवोचत्—श्रोतुमिच्छामि ज्ञानेन्द्र सर्वतन्त्रनिदानं रहस्यं संपुटोद्भवलक्षणम्।

**अन्त**

यथा केतकिपुष्पं गन्धहस्तिनोपभुक्तं कस्तूरिकादिभावेन परिणमति, इतरैश्च हस्तिभिरुपभुक्तममेध्यभावं परिणमति। न तत्र केतकिपुष्पदोषः। तथा रागादयोऽपि विशुद्धसन्तानवर्तिनः सिद्धमेव फलं कुर्वन्त्यशेषविशेषयोगात्। यथा क्षीरं सर्पादिभिरुपभुज्यमानं विषादिभावेन परिणमति, अन्यैश्च पुनः पुरुषैरुपभुज्यमानममृतभावमापद्यते। एवं ते कुलपुत्रा रागादयो विशेषभाविनो विशिष्टफलावाहका भवन्ति। प्रकृतिनिरवद्यत्वात् प्रयोगः। ये ये विशेषसन्तानभाविनस्ते ते विशिष्टफलावाहकाः। यथा केतक्युदयो विशिष्टसन्तानवन्तश्च रागादय इति स्वभावविशुद्धिः।

**पुष्पिका**

इति श्रीसर्वतथागतकायवाक्चित्तवज्रगुह्यादिगुह्यसमाजे तन्त्रराजे सर्वकल्पनिदान-

तिलकः समाप्तः । समाप्तश्चायं गुह्यसमाजस्यापरार्धः । ये धर्मा० । शुभ संवत् 936 मिति श्रावण शु० चतुर्दशीदिने संपूर्णम् ।

### विषय निर्देश

इसमें 36 पटल हैं । प्रत्येक पटल की अवान्तर पुष्पिका में उस पटल में वर्णित विषय का उल्लेख है । ( नवम पटल के बाद कई पटलों में एक ही पटलसंख्या लिपिक प्रमाद से दो दो बार लिख जाने से भ्रान्तिजनक हो गई है ) ।

"इति श्रीसर्वतथागतकायवाक्चित्तवज्रे रहस्यातिरहस्ये गुह्यसमाजतन्त्रराजस्य परार्धे" इतना अंश प्रायः सभी पटलों की पुष्पिकाओं में है । इसके बाद विषय और पटलसंख्या का निर्देश इस प्रकार है —

| पत्रसं. | इतिश्री···· | ····परार्धेऽभिधानाभि···· | ····बोधिचित्तोत्पादादिभावनादितत्त्वप्रकरणं नाम | प्रथमः | पटलः । |
|---|---|---|---|---|---|
| 6 | ,, | ,, | बोधिचित्तावतारो नाम | द्वितीयः | ,, |
| 7 | ,, | ,, | तत्त्वोद्देशो नाम | तृतीयः | ,, |
| 11 | ,, | ,, | सम्पुटोद्भवकल्पो नाम | चतुर्थः | ,, |
| 14 | ,, | ,, | गुह्यसमाजाभिषेको नाम | पञ्चमः | ,, |
| 16 | ,, | ,, | प्रज्ञोपायार्थभावना नाम | षष्ठः | ,, |
| 18 | ,, | ,, | द्वितीयस्य तृतीयं प्रकरणं नाम | सप्तमः | ,, |
| 22 | ,, | ,, | सर्वतन्त्रनिदानरहस्यं नाम | अष्टमः | ,, |
| 23 | ,, | ,, | हेरुकोत्पत्तिर्नाम | नवमः | ,, |
| 30 | ,, | ,, | सम्पुटोद्भवकल्पराजो नाम | नवमः (दशमः) | ,, |
| 31 | ,, | ,, | कटपूतनीचित्त[स]मुद्धारो नाम | दशमः(एकादशः) | ,, |
| 33 | ,, | ,, | राजचिह्नमुद्राप्रकरणमेकादशः | (द्वादशः) | ,, |
| 34 | ,, | ,, | डाकिनीसंकेतो नाम | द्वादशः (त्रयोदशः) | ,, |
| 37 | ,, | ,, | स्कन्धायतनविशुद्धिर्नाम | द्वादशः (चतुर्दशः) | ,, |
| 40 | ,, | ,, | चर्यालिङ्गनं नाम | त्रयोदशः (पञ्चदशः) | ,, |
| 42 | ,, | ,, | सम्पुटोद्भवचर्या नाम | चतुर्दशः (षोडशः) | ,, |
| 45 | ,, | ,, | षष्ठस्य प्रथमप्रकरणं नाम | पञ्च(सप्तदशः) | ;, |
| 49 | ,, | ,, | षष्ठस्य तृतीयप्रकरणं नाम | षोडशः(अष्टादशः) | ,, |

| पत्रसं. | इतिश्री······ | ······परार्द्धे | |
|---|---|---|---|
| 52 | ,, | ,, | वसन्ततिलकं नाम सप्तदशः (एकोनविंशः) पटलः। |
| 62 | ,, | ,, | सर्वज्ञानोदयो नामाष्टादशः (विंशः) ,, |
| 64 | ,, | ,, | होमनाविधिर्नामोनविंशतिः (एकविंशः) ,, |
| 73 | ,, | ,, | सर्वकर्मप्रसन्नचक्राह्वयो नाम विंशतिः(द्वाविंशः) ,, |
| 83 | ,, | ,, | सर्वकर्मसाधनं नाम एक(त्रयो)विंशतिः ,, |
| 85 | ,, | ,, | मन्त्रगोपभावना नाम द्वाविंशतिः(चतुर्विंशतिः) ,, |
| 87 | ,, | ,, | तीर्थिकज्ञानापनयनं नाम त्रयो(पञ्च)विंशतिः ,, |
| 90 | ,, | ,, | सर्वक्रियासमुदयो नाम चतुः(षट)विंशः ,, |
| | | | (२७ वें पटल की पुष्पिका नहीं है। |
| 94 | ,, | ,, | वर्णोपहारो नाम षड्विंशतिः (अष्टाविंशः) ,, |
| 95 | ,, | ,, | पाठपुस्तकनिर्णयो नाम षड्विंशतिः(ऊनत्रिंशः) ,, |
| 96 | ,, | , | चतु·········नाम सप्तविंशतिः (त्रिंशः) ,, |
| 97 | ,, | ,, | आचार्यमहासन्धानो नामाष्टाविंशतिः(एकत्रिंशः) ,, |
| 98 | ,, | ,, | सहस्रमुखसिद्धिपूजासत्कारो नामैकोनत्रिंशतिः(द्वात्रिंशः),, |
| 106 | ,, | ,, | सर्वत्रनिदानमहाकल्पराजो नामैकोनत्रिंशतिः(त्रयस्त्रिंशः),, |
| 107 | ,, | ,, | बुद्धमायाविकुर्वितं नाम त्रिंशतिः (चतुस्त्रिंशः) ,, |
| 124 | ,, | ,, | सर्वकल्पनिदानतिलकः समाप्तः ।। |

**विवरण**

इस ग्रन्थ की फिल्म इण्डियन एडवांस स्टडी फार वर्ल्ड रिलीजन, न्यूयार्क से के. उ. ति. शि. सं. ग्रन्थालय में उपलब्ध हुई है, जिससे यह विवरण तैयार किया गया है। नेपाल दरबार लाइब्रेरी कैटलाग भाग 7, खण्ड 1, में इस ग्रन्थ की 4 मातृकाओं का गुह्यसमाज परार्ध तथागतगुह्यक तथा गुह्यसमाधि इन तीनों नामों से उल्लेख है।

**विशेष वक्तव्य**

गायकवाड़ ओरि० सीरीज बड़ौदा से गुह्यसमाज पूर्वार्ध प्रकाशित है। यद्यपि ग्रन्थान्तरों में गुह्यसमाज उत्तरार्ध (समाजोत्तर) के निर्देश से जो उद्धरण पाये जाते हैं, वे उसी के 18 वें प्रकरण में उपलब्ध हो जाते हैं, फिर भी 'गुह्यसमाज-परार्ध' नाम से प्रतीत होता था कि यह उसी का उत्तर भाग होगा, किन्तु इसे मिलाने पर ज्ञात हुआ कि इसके 1 से 34 प्रकरण तक का अंश

सम्पुटोद्भवतन्त्र से, जो कि दुर्लभ बौद्ध ग्रन्थ शोधयोजना से शीघ्र प्रकाशित हो रहा है, अक्षरशः मिलता है। केवल प्रत्येक पटल को पुष्पिका ( जैसा कि विषय निर्देश में लिखा गया है ) बदल कर उसे गुह्यसमाज कह दिया है। पत्रसं० 1 से 107 तक की पूरी विषयवस्तु संपुटोद्भव की है। पत्र 108 से 125 का एक लम्बा प्रकरण इसमें नवीन दिया है, जिसमें विभिन्न प्रकार की सिद्धियों की प्राप्ति के साधनों, विविध औषधियों, मन्त्रों एवं अन्य पदार्थों का वर्णन है एवं साधक की अपनी क्षमता के अनुसार साधन करने का विधान है।

इस प्रकार की भ्रान्तियाँ अन्यत्र भी मिलती हैं। जैसे—गोरक्षसंहिता के कादिप्रकरण की सारी विषयवस्तु श्रीमतोत्तर तन्त्र से मिलती है, केवल प्रत्येक पटल के अन्त में एक लम्बी-चौड़ी पुष्पिका (कोलोफन) भिन्न रूप से दे दी गई है।

## 41. परमगम्भीरश्रीवज्रयोगिनीमन्त्रार्थतत्त्वनिर्देशः

**ग्रन्थ**—श्रीवज्रयोगिनीमन्त्रार्थतत्त्वनिर्देश
**सं०**—MBB. 1973–163
**पत्र संख्या**—1–6, **पंक्ति** प्र० प०–12, **अक्षर** प्र० पं० 38
**आधार**—नेपाली कागज, **लिपि**—नेवारी, **पूर्ण**।

**प्रारम्भ**

ॐ नमो वज्रवाराह्यै।
नत्वा श्रीवज्रवाराहीं मन्त्रमूर्ति जिनेश्वरीम्।
अत्यन्तां वरदां भीमां लघुविन्द(घ्न)निवारिणीम्॥
वक्ष्ये मन्त्ररहस्यार्थमेकैकाक्षरतत्त्वतः।
राजाः(ज)संप्रत्ययकरं सर्वविघ्नविनाशिनीम्॥
यूकारस्याग्रतो दृष्ट्वा प्रणवं सुप्रभास्वरम्।
धर्मार्वं सविज्ञेयं निस्तरङ्गं निरञ्जनम्॥
सूर्येन्दुसदृशाकारां भावयेत् सततं सुधीः।
सर्वधर्मप्रतिष्ठानं भावाभावविवर्जितम्॥

**अन्त**

एवं ज्ञात्वा तु वै योगात् अभ्यासे बुद्धिमान् सदा।
स सिद्ध्यति न सन्देहो मन्दपुण्योऽपि मानवः॥
स्वाध्यायते सदा मन्त्री मोदयेत् तत्समादरम्।
सादरं पूज्यते शास्ता सादरं सर्वकर्मसु॥

जल्पन्नेकरसैर्विमूढमनसा ध्यानार्थसंघातने
नाडीधातुसडाकडाकिनिवृता पीठादिभूम्यन्विता ।
एकैकाक्षरतत्त्वभेदरचितः श्रीवज्रदेव्या हृदि
नानैकारसुपूजिता वलहसद् द्वात्रिंशतत्त्वामरे ॥

**पुष्पिका**

इति परमगम्भीरश्रीवज्रयोगिनीमन्त्रार्थतत्त्वनिर्देशः समाप्तः ॥

**विवरण**

इसका भी इंस्टीट्यूट आफ इंडियन एडवांस स्टडी फार वर्ल्ड रिलीजन, न्यूयार्क से प्राप्त माइक्रोफिश प्लेट के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में उपलब्ध है ।

इसमें वज्रयोगिनी महामन्त्र के प्रत्येक अक्षर का तत्त्वार्थ निरूपित किया गया है ।

## 42. योगसिद्धान्तबुद्धसिद्धितन्त्रम्

**ग्रन्थ**—योगसिद्धान्तबुद्धसिद्धितन्त्र

**संख्या—MBB.I–158**

**पत्र संख्या—1–26, पंक्ति प्र० पं०–14, अक्षर प्र० पं ०–32**

**आधार**—नेपाली कागज, **लिपि–**नेवारी, **अपूर्ण** ।

**प्रारम्भ**

ॐ नमः श्रीगुरुवज्रसत्त्वेभ्यः

एवं मया श्रुतमेकस्मिन् समये भगवान् वज्रसत्त्वः सर्वतथागतकायवाक्चित्तप्रज्ञापारमिता-योगपद्मं विजहार । आर्यवीतरागप्रभृतिप्रमुखैरार्यावलोकितेश्वरादौ अशीतिकोटियोगी-श्वरादयो मध्ये वज्रपाणिरवलोकितेश्वरं व्यवलोक्य स्मितमकार्षीत् । वज्रपाणिमुत्था-यासनात् समुत्सङ्गं प्रदक्षिणीकृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य कृतकरपुटो भगवन्तमध्येषयामास—

भगवन् श्रोतुमिच्छामि योगमुत्पत्तिलक्षणम् ।
समुत्पन्नः कथं देव सर्वाकारकसम्बर ॥
कथं पीठादिसंकेत मन्त्रजाप कथं भवेत् ।
अक्षमाला कथं युक्ति अलिवलि कथं प्रभो ॥
पञ्चामृतं कथं देव पञ्चाकूहा कथं भवेत् ।
कथं स्वमण्डलाख्यस्य प्रज्ञाचक्रं कथं प्रभो ॥

कथं बुद्धः कथं प्रज्ञा कथं सङ्घस्तथैव च।
सर्वधर्मपरं ज्ञानं भावना कथ्यते प्रभो॥

**अन्त**

लीलावज्रपद–नित्यबुद्ध–वज्रसत्त्व–श्रीहेरुकवीर–महासंवर –दिगम्बर – महागुरुसिद्धिस्वरूप-योगिनीवज्रदेवीलालामहासुखपद्मे धर्मोदये नित्यं समाधियोगं वज्रलिङ्गपदं संस्थाप्य.... ।

**पुष्पिका**

( ग्रन्थ अपूर्ण होने से अन्तिम पुष्पिका उपलब्ध नहीं है। प्रत्येक पटल की अवान्तर पुष्पिकाएँ आगे विषयनिर्देश में दी गई हैं।)

**विवरण**

इसका माइक्रोफिश प्लेट इण्डियन एडवांस स्टडी फार वर्ल्ड रिलीजन, न्यूयार्क से के. उ. ति. शि. सं. के शान्तरक्षित ग्रन्थालय में उपलब्ध हुआ है। उसी के आधार पर यह विवरण तैयार किया गया है।

**विषयनिर्देश**

ग्रन्थ में जितना अंश उपलब्ध है, उसमें 10 पटल पूर्ण तथा 11 वें का कुछ अंश है। प्रत्येक पटल की पुष्पिका से उसमें वर्णित विषय प्रतीत हो जाता है। ये अवान्तर पुष्पिकायें इस प्रकार हैं—

| | | | | | |
|---|---|---|---|---|---|
| पत्र | 2. | इति | योगसिद्धान्ते | बुद्धसिद्धिनिर्देशः प्रथमपटलः। | |
| ,, | 4. | ,, | ,, | ,, | पीठक्रर्तानिर्देशो द्वितीयपटलः। |
| ,, | 5. | ,, | ,, | ,, | पूजादिकृत्यनिर्देशस्तृतीयपटलः। |
| ,, | 7. | ,, | ,, | ,, | शुद्धिनिर्देशश्चतुर्थपटलः। |
| ,, | 10. | ,, | ,, | ,, | शुद्धिनिर्देशः पञ्चमपटलः। |
| ,, | 13. | ,, | ,, | ,, | भावनिर्देशध्याननिर्देशः षष्ठपटलः। |
| ,, | 14. | ,, | ,, | ,, | कर्मचर्याज्ञाननिर्देशः सप्तमपटलः। |
| ,, | 18. | ,, | ,, | ,, | ज्ञाननिर्देशोऽष्टमपटलः। |
| ,, | 20. | ,, | ,, | ,, | क्रमविधिनिर्देशो नवमपटलः। |
| ,, | 23. | ,, | ,, | ,, | गुह्याभिषेकादिनिर्देशो दशमपटलः। |

ग्यारहवें पटल के उपलब्ध अंश में प्रत्येक स्वर और व्यञ्जन के देवता आदि का वर्णन है।

## 43. मण्डलसाधनविधिः

**ग्रन्थ**—मण्डलसाधनविधि

**संख्या**—MBB. II–272

**पत्र सं०**—25 (60-84) **पंक्ति प्र० प०**-6, **अक्षर प्र० पं०** 38

**आधार**—नेपाली कागज, **लिपि**-नेवारी, **पूर्ण** ।

**प्रारम्भ**

ॐ नमः श्रीवज्रसत्त्वाय ।

आदौ गुरुमण्डलं त्रिसमाधिबलिदानं च कृत्वा देवताधिवासनं कुर्यात्। ततःसुगन्धजलेन मण्डलभूमिमभिप्रोक्ष्य ॐ भूः खमिति पठन्नाकाशीकुर्यात्। मण्डलसांगीतवज्रमयीभूमि ॥ भावना ॥ ततो हूँ लँ हूँ इत्यनेन वज्रमयीं भूमिं विभाव्य ॥ धूप ॥

समन्वाहरन्तु मां बुद्धा अशेषा दिक्षु संस्थिताः ।
इहाहममुको वज्री वर्तयिष्यामि मण्डलम् ॥
आयान्तु सर्वबुद्धौघाः सिद्धिमेनां प्रदास्यथ ।
अद्य मे सफलं जन्म सफलं जीवितं च मे ॥

**अन्त**

ततो वज्रपदेन हूँ फट् पूर्वे ॥१॥ ॐ आः फट् ॥ दक्षिणे ॥2॥ ॐ आः फट् ॥ पश्चिमे ॥3॥ सर्वदुष्टान् घातय 2 अ 3 हूँ ह्रीं फट् ॥उत्तरे ॥4॥ ततो ज्वलद्दीपमादाय दीपेन मण्डलं पश्येत् ॥ ततो द्वारोद्घाटनम् । ॐ वज्रोद्घाटय समय प्रवेशय हूँ ॥ इति पठन् ॥ प्रदक्षिणयन् पश्चिम-द्वारादिचतुष्टयमुद्घाटयेत् । ॐ समयं प्रविशामि। इत्युत्थाय नर्माली नृत्यन् आदाय स्वशिरसि बद्ध्वा वज्रं प्रणम्य स्तुतिः। सर्वसत्त्वानां सर्वसिद्धिः प्रसादीकुरुध्वमिति विज्ञापयेत् ।

**पुष्पिका**

॥ इति मण्डलसाधनविधिः ॥

**विवरण**

इंडियन एडवांस स्टडी फार वर्ल्ड रिलीजन, न्यूयार्क से के. उ. ति. शि. सं. के शान्तरक्षित ग्रन्थालय में प्राप्त माइक्रोफिश के आधार पर उक्त विवरण दिया गया है ।

**विषय निर्देश**

मण्डलविधान बौद्ध साधना का एक प्रमुख अंग है। प्रस्तुत ग्रन्थ में इसी की विधि बताई

गई है। प्रारम्भ से लेकर मण्डलप्रवेश तक का सम्पूर्ण विधान समन्त्रक इसमें दिया है। वसुधारादि देवताधिवासन, भूमिप्रोक्षण, भावनाकरण, मण्डलादिकर्मोपयोगी रजःसूत्रादि, लेखनप्रकार, विघ्नकीलन, वज्राधिवासन, घण्टा-शंख-कलशाधिवासन, सूत्रचालन,अन्यदेवता-धिवासन, वज्रपातन, सूत्रण, उद्घाटन और प्रवेश इन विषयों की विधि इसमें वर्णित है। ग्रन्थसमाप्ति के बाद स्मरणीय सूक्ति के रूप में निम्न ज्येष्ठानुक्रम भी इसमें दिया है—

पञ्चविधो ज्येष्ठानुक्रमः—अभिषेकज्येष्ठानुक्रम एकः, प्रव्रज्याज्येष्ठानुक्रमो द्वितीयः, ज्ञान-ज्येष्ठानुक्रमस्तृतीयः, जन्मज्येष्ठानुक्रमश्चतुर्थः, विद्याज्येष्ठानुक्रमः पञ्चमः ॥

## 44. सिद्धैकवीरप्रतिभेदान्तरम्

**ग्रन्थ**—सिद्धैकवीरप्रतिभेदान्तर

**ग्रन्थकार**—महावधूत श्रीकोंकणपाद

**संख्या**—MBB. II-46

**पत्र संख्या**—13 (5-17), **पंक्ति. प्र० प० 5, अक्षर प्र० पं०** 40

**आधार**—नेपाली कागज, **लिपि**-नेवारी (प्राचीन), **पूर्ण**।

**प्रारम्भ**

अथातः प्रणम्य वज्रधरं श्रीमौलिने उद्यत ( उच्यते ) कथनमन्त्रपदसारसंग्रहनानाविधभेद-निगदितमन्त्रज(पम)न्त्रार्थयत्किञ्चिदेकवीरनिर्गतसाधनसंग्रहः। यथा—

अग्निना दह्यते काष्ठं भिधुरैर्भिद्यते गिरिः।
होमेन यथा सिद्धयते ग्रहस्तद्वदेकल्लवीरस्य साधनम् ॥

परिपृच्छति। तमाह—सर्ववीरसपर्यया परिप्रथा च अर्चनमिति किं नाम संग्रहम्। भगवानाह·····।

**अन्त**

गुरुभक्तानुगा ये शिष्या ये गताः सलन( शरण )त्रये।
दर्शयेत् तन्त्रमिदं राजैकविल(वीर)स्य साधनम् ॥
[ मोहने ] भावयेद् रक्तं वश्ये[च]पित्तसन्निभम्।
उच्चाटने धूम्रवर्णं मालने(मारणे) कृष्णसन्निभम् ॥
नीलवर्णं भावयेत्, मोक्षकर्म कर्मान्तरमुपसृतम्।
करोति सर्वकर्माणि अचलवादप्रसादतः।
भविता एकरूपेण राजा वै प्रचरेत् भुवि ॥ हुँ फट् ॥

**पुष्पिका**

इति सिद्धैकवीरप्रतिभेदान्तरे सहजाभिलासं(ष)नामाभिसमयः समाप्तः। अचलाभिसमयः प्रसिद्धः।

कृतिरियं बोधिमहावधूतकोङ्कणपादानामिति।

**विवरण**

इस ग्रन्थ का विवरण इण्डियन एडवांस स्टडी फार वर्ल्ड रिलीजन, न्यूयार्क से के० उ० ति० शि० सं० के शान्तरक्षित ग्रन्थालय में प्राप्त माइक्रोफिश से दिया गया है।

**विषय निर्देश**

इसके प्रारम्भिक ५ पत्र प्रकीर्णक जैसे प्रतीत होते हैं। ५वें पत्र में "इति श्रीसिद्धैकवीरोद्धृतश्रीचण्डमहारोषणसाधनं समाप्तम्" यह पुष्पिका है, किन्तु इन पत्रों का पूर्वापर सम्बन्ध नहीं बैठता। अतः हमने इस अंश का विवरण नहीं दिया है। इसके अनन्तर इसमें ५ प्रकरण हैं—

सहजावस्थात एकल्लवीरसिद्धिः प्रथमः परिच्छेदः।
चकारपरिशोधनपरिच्छेदो द्वितीयः।
ललिताक्षितार्थगहनपरिच्छेदस्तृतीयः।
बाह्यविचारणा चतुर्थः परिच्छेदः।
अचलाभिसमयः ( सहजाभिलासो(षो)नामाभिसमयः ) पञ्चमः परिच्छेदः।

## 45. धारिणीहृदयसंग्रहः

**ग्रन्थ**—धारिणीहृदयसंग्रह
**संख्या**—MBB. II-256
**पत्र संख्या—1-61, पंक्ति प्र० प० –10, अक्षर प्र० पं०–40**
**आधार**—नेपाली कागज, **लिपि**—नेवारी (रञ्जना), **पूर्ण**।

**विवरण**

एडवांस स्टडी फार वर्ल्ड रिलीजन्स से के० उ० ति० शि० सं०के ग्रन्थालय में प्राप्त माइक्रोफिश से इसका विवरण दिया जा रहा है। यह किसी बड़े ग्रन्थ का अंश प्रतीत होता है, क्योंकि इसके प्रत्येक पत्र में दाहिनी ओर 1 से 61 तक के पत्रांक हैं और बांई ओर 59 से 120 तक के।

4

इस संग्रह में 6 ग्रन्थ हैं। 'धीः' के अंक 2 में 'धारिण्यादिसंग्रह' ग्रन्थ का विवरण दिया गया है। उसमें भी इन्हीं नामों से धारिणियों का उल्लेख है, किन्तु इनकी विषयवस्तु उनसे भिन्न है। प्रत्येक का विवरण नीचे दिया जा रहा है—

**1. एकजटाधारिणी**

**ग्रन्थ**—एकजटाधारिणी

**पत्रसंख्या**—1–9, **पूर्ण**।

**प्रारम्भ**

ॐ नमः आर्य उग्रतारादेव्यै एकजटायै नमः। श्रावकप्रत्येकबुद्धबोधिसत्त्वक्रोधराजबुद्धधर्म-संघेभ्यः। नमो भगवते परमगुरवे महाकारुणिकाय तथागतायार्हते सम्यक्संबुद्धाय।

एवं मया श्रुतमेकस्मिन् समये भगवान् माल्यगिरिशिखरे विहरति स्म महता भिक्षुसंघेन सार्धं बोधिसत्त्वगणक्रोधराजगणविद्याधरगणेन च। तथा–रोचना भिक्षुणी चैव तारा भगवती तथा मालिनी पर्णशबरी मामकी पाण्डरा तथा॥ तत्र भगवतस्तस्याग्रे भगवान् अवलोकितेश्वरः लोकानामनुकम्पायै शास्तारं परिपृच्छति।

**अन्त**

भू[ः]स्वाहा, भुव[ः]स्वाहा, स्व[ः]स्वाहा, भूभुवस्व (भूर्भुवः स्वः) स्वाहा, वज्रवाराहि स्वाहा, वज्रतारायै स्वाहा, सर्वमण्डलविद्याधिपतये स्वाहा, पञ्चरक्षायै स्वाहा।····समाश्वासकारये स्वाहा। उभयप्रधे( दे ) स्वाहा। रक्ष मां सर्वसत्त्वानां च रक्षोभूतप्रेतपिशाचडाकिन्यापसर-नयेभ्यः। सर्वतो मम सर्वसत्त्वानां च शान्ति कुरु पुष्टि कुरु रक्षां कुरु भगवति पिङ्गरै(लै)-कजटे हूँ 3 फट् 3 नमोऽस्तु ते स्वाहा।

**पुष्पिका**

इति एकजटाधारिणी समाप्ता।

**2. महासाहस्रप्रमर्दिनीमहायानसूत्रम्**

**ग्रन्थ**—महासाहस्रप्रमर्दिनीमहायानसूत्र

**पत्रसंख्या**—14 ( 9–23 ), **पूर्ण**।

**प्रारम्भ**

ॐ नमो भगवत्यै आर्यमहासाहस्रप्रमर्दिन्यै।

सिद्धं सुसिद्धं सत्ये तुरे महाबल्ये जयाजटिने। अखने मखने खखने खरटे खरगे हाचपिगरे। तिमिंगिले तिमिशालिनि मङ्गले स्वाहा। मिषन्तु पदाः सर्वसत्त्वानां च वैश्रवणस्य महाराजस्य

नाम्ना वरेणैश्वर्याधिपते नमस्ते स्वाहा। स्याद्यथेदम्। अखनखे विनखे वन्ये विरागे यूपभे वखवखिने चखिने अखिने वलभगे भगेन्द्रले वशे वशवर्तिनि स्वाहा।

**अन्त**

विपश्चिद्बुद्धं शरणमुपैम शिखिनं च बुद्धं सुगतं च विश्व(श्रु)तं।
ककुच्छन्दबुद्धं कनकमुनिं च काश्यपं गविशारं`````साक्षमुनिं च॥
गौतमं तत्रानसप्तान्नं चोत्तमानां पुर्यश्च गन्धश्च शरपूजा।
कार्या न तेषां मनसा च क्षत्वा प्रसन्नचित्तः शरणमुपैति॥
एतेषु बुद्धेषु महर्धिकेषु या देवताः सन्ति अभिपूर्णाः।
ता देवता उत्तमना उदग्राः कुर्वन्तु शान्तिं च शिवं च नित्यम्॥
स्वस्त्यस्तु मम सर्वसत्त्वानां च स्वाहा॥

**पुष्पिका**

इत्यार्यमहासाहस्रप्रमर्दिनीनाम महायानसूत्रं परिसमाप्तम्॥

**वक्तव्य**

इसमें महासाहस्रप्रमर्दिनी की विस्तृत साधना है। बीच-बीच में पूजा के मन्त्र व स्तुति भी है।

**3. महामायूरी महाविद्याराज्ञी**

**ग्रन्थ**—महामायूरी महाविद्याराज्ञी

**पत्र सं०**—21 ( 23–43 ), पूर्ण।

**प्रारम्भ**

ॐ नमो भगवत्यै महामायूर्यै। तद्यथा—कालि करालि कुम्भाण्डि संखिनि कमलाखि हरिति हरिकेशि श्रीमति हरिपिंगले ललम्बे लम्बोदलि( रि ) रौद्रचित्ते कालपाशे कपाल-मालाधारिणि कलशोदरि समराक्षसभूतग्रसिनि प्रतीच्छथेमं गन्धधूपबलिनिवेद्यं च दास्यामि। रक्षथ मम सर्वसत्त्वानां च सर्वभयोपद्रवाभ्यां जीवन्तु वर्षशतम्—

**अन्त**

रागो द्वेषश्च मोहश्च एते लोकत्रये विषाः।
त्रिविषा[ द् ] भगवान्(वन्) रक्ष सत्यह विष````॥
यद्बलं रागबद्धाया महता``````````यच्च स।
तद्यथा मम सर्वसत्त्वानां च``````````॥

पुष्पिका

आर्यमहामायूरी विद्याराज्ञो ........ मुखात् प्रतिलब्धा समाप्ता ॥

4. महाशीतवती महाविद्या

ग्रन्थ—महाशीतवती महाविद्या

पत्र सं०—3 ( 43-45 ), पूर्ण।

प्रारम्भ

श्रीनैरात्माभगवत्यै। आर्ये महाशितवत्यै। तद्यथा—यागे योगे करिगे भगे षरगे संसार-तलगे सासङ्करे....ष् स् य् एकल परा। त्रासय विचालय विलोलय2 वियाकर।

अन्त

शान्ति कुरु2 माणे हर2 बन्ध2 हिलि2 खिरि2 खेचरि हर2 खुलु2 नैरात्मे। नमो बुद्धानां भगवती स्वाहा।

पुष्पिका

॥ आर्यमहाशितवती महाविद्याराज्ञी समाप्ता ॥

5. आर्यमहाप्रतिसराकल्पः

ग्रन्थ—आर्यमहाप्रतिसराकल्प

पत्र सं०—11 ( 45-55 ), पूर्ण।

प्रारम्भ

ॐ नमो भगवत्यै आर्यमहाप्रतिसरायै। नमो बुद्धाय। नमः संघाय। नमः सर्वतथागतानाम्। नम आचार्यबुद्धबोधिसत्त्वधर्माचार्येभ्यः। तद्यथा-ॐविपुलमले ॐविपुलविमले विमलमल्ले विमल्ले जय वज्रज्वालागर्भे....मञ्जरि शोधनि यथा परिशोधने ॐ गुह्यावलि गमनविचारिणि।

अन्त

प्रतिसरे हुँ 2 पोष 2 स्वाहा। नमः सर्वतथागतेभ्यो....वज्रोद्भवे वज्रं वारय....सर्वराष्ट्रस्य रक्ष 2 मम सुचिरं सर्वसत्त्वानां च वज्रे वज्रभयं नाशय 2 सर्वमारभयानि हुँ 2 पोष 2 सम्बर स्वाहा बुद्धमैत्री सर्वतथागतवज्रकल्पान्वितेन मम सर्वकर्मबलस्यायुत्वाय स्वाहा।

पुष्पिका

इसमें दो कल्प हैं। दोनों की पुष्पिका इस प्रकार है—

1. आर्यमहाप्रतिसरायाः प्रथमकल्पः समाप्तः।
2. आर्यमहाप्रतिसराया विद्याधरकल्पः समाप्तः।

वक्तव्य

इसके बाद पृष्ठ 56 से 61 तक का ग्रन्थ अत्यन्त अस्पष्ट होने से पढ़ा न जा सका।

—:o:—

# लुप्त बौद्ध-वचन संग्रह

—व्रजवल्लभ द्विवेदी, ठिनलेराम शाशनी—

[ इस शीर्षक के अन्तर्गत 'धीः' के पिछले अंकों में अनेक ग्रन्थों और ग्रन्थकारों के लुप्तप्राय वचनों का संग्रह आवश्यक टिप्पणियों के साथ किया गया था। प्रस्तुत अंक में गुह्यसमाजतन्त्र को चन्द्रकीर्तिकृत प्रदीपोद्योतन व्याख्या में उद्धृत ग्रन्थों के वचनों को संकलित किया जा रहा है। सन्ध्याव्याकरण व्याख्यातन्त्र और व्याख्यातन्त्र के वचनों को यहाँ अलग-अलग शीर्षकों में इसलिये संकलित किया गया है कि पंचक्रम में नागार्जुन ने सन्ध्याव्याकरण के अतिरिक्त वज्रमाला और चतुर्देवीपरिपृच्छा को भी व्याख्यातन्त्र कहा है। इन ग्रन्थों की उपलब्धि के अभाव में यह निश्चय कर पाना कठिन है कि ये वचन किस व्याख्यातन्त्र के हैं ? ]

## आर्षव्याख्यानम्

(1)

[1]अथातः कथयिष्यामि मण्डलं चित्तमुत्तमम् ।
वज्रज्ञानप्रतीकाशं कायवाक्चित्तमण्डलम् ॥
नवात्मकमिदं श्रेष्ठं सुनियुक्तं तथोदितम् ।
द्विविधागमसंकेतं सुप्रमाणं तदुच्यते ॥
संवृतिः परमार्थं यदद्वयं शोभनं मतम् ।
प्रज्ञासूत्रमिदं तस्मात् तदुपायानुवर्णितम् ॥
प्रज्ञोपायैकसूत्रेण धर्मात् संभोगमुत्तमम् ।
सूत्रितं मण्डलं चैतं प्रतीत्या द्वादशाङ्गतः ॥
सत्यार्थं चतुरस्रं स्याद् ब्रह्मविहारकोणकम् ।
द्वारसंग्रहवस्त्वाख्यं प्रत्येकं तुर्यसंज्ञकम् ॥
धर्मतत्त्वार्थसंकेतं चक्राभ्यन्तरमण्डलम् ।
अभेद्यज्ञानचिह्नं तद् वज्रेन्द्रनीलमुद्रकम् ॥
पञ्चाकारप्रभेदाख्यं शूलं संसारनाशकम् ।
प्राक्स्थितादर्शमात्रं तु चक्रं ज्वालाविभूषितम् ॥

1. गुह्यसमाज. प्रदीपोद्योतन, पृष्ठ 43–44

समन्तसमताजालं रत्नं याम्येकसंज्ञितम्।
प्रत्यवेक्षणपद्माख्यं पद्मरागाविपश्चिमम् ॥
उत्तरोत्तरचित्तं यज्जगद्विकल्पदालनम्।
कृत्यानुष्ठानखड्गं स्याद् रश्मिज्वालासमप्रभम् ॥
आग्नेय्यां नेन्द्रं (?) मैत्रीं तु नीलमेघसमप्रभम्।
नैर्ऋत्यो(त्यां) करुणाख्या स्यान्मामकीकुलवज्रकम् ॥
वायव्यां पद्मसंज्ञा तु मुदिता सुस्थितानना।
ऐशान्युत्पलमाभाति सोपेक्षा नीलसंज्ञिता ॥
दानपूर्वं तथा द्वारे मुद्गरं कान्तिसुप्रभम्।
तथैव प्रियवाद्याख्यं दण्डं वज्रार्चिसुप्रभम् ॥
अर्थचर्या तु पद्माख्यं पश्चिमे हयकन्धरे।
वज्रं समानचर्यार्थं वज्रकुण्डलि वज्रिनः(णः) ॥
तदित्थं कथितं सम्यग् मुद्राविन्यासलक्षणम्।
यथा संस्थानतः पूजा भवेत् त्रिविधभावनैः ॥
महत्त्वपूर्वकं ह्येतन्मुद्रामण्डलमुच्यते।
क्षणादिकालभेदेन संज्ञा स्यात् षोडशाब्दिका ॥
अनुत्पादोषिताशान्तयोषिता इति निश्चिता।
शान्तधर्मानिपेताख्या कान्ति ( ? ) सुप्रभोदिताम् ॥
प्रतीत्यवासना गन्धं पुष्पं ज्ञानविकासनम्।
निःस्वभावकुले ज्ञेयं सर्वज्ञज्ञानमव्ययम् ॥
कामयेदीदृशीं प्राज्ञो योषितं धर्मधातुकम्।
न चाध्यात्मं न बाह्योऽन्तं नोभयेऽन्यत्र संस्थिताः ॥
अस्थानस्थितियोगा [स्यात्] स्यादतो मामकी मता।
तत्स्वभावैकयोगस्तु अधिष्ठानं तदुच्यते ॥
आकाशैकत्वसंवाससौम्यं बुद्धपदं भवेत्।
अतः संहरणाद् विद्याद् विषयाः परिकल्पिताः ॥
सूत्रं ज्ञानेन्द्रियं शस्तं शुक्रं विशुद्धिधर्मता।
रक्तं सर्वज्ञताज्ञानं ये धर्माः परिकल्पिताः ॥

त एव देवताः ख्याता निःस्वभावो निवेदनम् ।
एवं तुष्यन्ति ते बुद्धा जिनौरसा विशेषतः ॥
लौकिकी कल्पना येषां तेषामेव यथोदितम् ।

( 2 )

[1]प्रज्ञापारमितां प्रज्ञां धर्मकार्यैकमातृकाम् ।
कामयेन्निःस्वभावाख्यां तथताद्वययोगतः ॥
संभोगतुल्यतां जातां तामेव भगिनीं मताम् ।
कामयेन्मन्त्रमूर्त्या तु स्वाधिदैवतयोगवान् ॥
साधको भावयेत् तां तु पुत्रीं निर्माणरूपिणीम् ।
कामयन्नीदृशीं योगी भगिनीमातृपुत्रिकाम् ।
स सिद्धिं विपुलां गच्छेन्महायानाग्रधर्मसु ॥

( 3 )

[2]अस्थानकमिदं गुह्यं शान्तैकं सुखमुत्तमम् ।
सन्ध्याय कथितं चेदं सम्यक्संबोधिप्रापकम् ॥
आकाशानन्ततायोगाद् रूपादीनामनन्तता ।
ते वै तथागताः प्रोक्ता बोधिसत्त्वास्तथैव च ॥
तत्त्वसंग्रहमेवेदं मण्डलं यत् स्वकायतः ।
कल्पयन्तीह सत्काया बोधिसत्त्वा हि मूर्च्छिताम् ॥
न जानन्ति तदर्थं ते सुखेनोन्मादचोदिताः ।
बोधिसत्त्वान्महासत्त्वान् वक्ष्यन्ति मूर्च्छिता इति ॥

( 4 )

[3]भिन्नाकारक्षेत्रं भिक्षा तदुच्चारणमशनम् ।
एभिर्भिक्षाशिना नेष्टां योजयन्ति हितव्रताः ॥
आश्वासं प्रश्वासं योगी चतुर्योगैकतत्परः ।
जपेन्मन्त्रमभिन्नाङ्गं प्रज्ञोपायपदे स्थितः ॥

---

1. गु. स. प्र., पृ. 48
2. ,, , पृ. 49–50
3. ,, , पृ. 63

अयुतद्वयं सहस्रं च षट्शतानि तथैव च।
अहोरात्रेण योगीन्द्रो जपसंख्यां करोति च॥

( 5 )

[1]ये दश वायवः प्रोक्तास्ते पद्मोत्पलसंज्ञकाः।
त्रिवज्रतत्त्वमाख्यातं जात्येकता त्रिधा मता॥
कर्णिकारं तथा मल्लिका यूथिका करवीरकम्।
लोचनादि यथासंख्यं माहेन्द्रादींस्तु योजयेत्॥
निःस्वभावपदन्यासाद् देवतारूपयोगतः।
सा भवेन्महती पूजा सर्वबुद्धैकतोषणे॥
तदेतत्पुष्पसन्ध्येयं न प्रतिपत्स्यन्तीतरे जनाः।
अनवबोधतस्तेषां सिद्धिः स्याद् दूरतः स्थिता॥
अभव्या वयमित्येवमुक्त्वात्मानं क्षिपन्ति ते।
तथा ह्यात्मप्रतिक्षेपात् सर्वबुद्धान् क्षिपन्ति हि॥
क्षिप्त्वा तु सर्वबुद्धान् वै निर्वाणेतरगामिनः॥

( 6 )

[2]अथ सन्ध्याय धर्मैकं सर्वज्ञं सर्ववित्प्रभुम्।
वज्रपाणिर्वदेन्नाथं समयतत्त्वार्थभाषणम्॥
तथतैकस्वभावा च ये बुद्धास्त्र्यध्वसंभवाः।
धर्मकायैकनिर्याता कथं वज्रेण चूर्णिताः॥
चूर्णयित्वा तु तां सम्यक् चित्तसिद्धिर्नयेत् कथम्।
अतीता उपदेष्टारो वर्तमानानुशासकाः॥
आराध्यागामिका बुद्धाः सम्यक्संबोधिदायकाः।
हन्यास्ते वै कथं नाथ वज्रेणाक्षोभ्यरूपतः॥
कथं ते प्रतिपत्स्यन्ति वाक्यं नानार्थतत्त्वतः।
भाषस्व भगवन् तत्त्वं आगामिजनितां प्रति॥
यज्ज्ञात्वा निर्विकल्पाः स्युः सन्ध्यायार्थं जिनौरसाः।
अथ वज्रधरोक्तां तु श्रुत्वा वाणीं जगद्धिताम्॥

---

1. गु. स. प्र., पृ. 76–77
2. ,, , पृ. 83–85

प्रत्युवाच ततः स्वामी भूयो वज्रधरं विभुम् ।
साधु वत्स महासाधु साधु समन्तभद्रक ॥
अध्येशयामास यस्त्वं सन्ध्यायभाषितां प्रति ।
तमहं प्रतिवक्ष्यामि भावितार्थं यथायथम् ॥
अक्षोभ्य इति निर्माणं वज्रं तद् स्यादभेदतः ।
सविद्या तस्य पाणि(:) स्यात् तत् वज्रं प्रभास्वरम् ॥
तस्माज्ज्ञानमयः कायः पञ्चरश्मिसमुज्ज्वलः ।
बुद्धाः स्कन्धादयः प्रोक्तास्त्र्यध्वज्ञास्ते त्रिवज्रता ॥
चूर्णनं देहवज्रेण प्राकृतस्कन्धनाशनम् ।
एतद् द्वेषकुलं रम्यमक्षोभ्यं ज्ञानवज्रजम् ॥
प्राप्नुवन्ति महासिद्धिं तत्क्षेत्रे जातिरुत्तमा ।
अथ महासुखः श्रीमान् ज्ञानमोक्षप्रसाधकः ॥
प्रकृतिशुद्धनिर्लेपो बोधिचर्याप्रसाधकः ।
आमन्त्र्य सर्वगुह्येशं वज्रपाणिं महाद्युतिम् ।
भाषते समयं तत्त्वं सम्यक्संबुद्धसाधनम् ॥
धर्मरत्नप्रवेशेन वज्रसत्त्वं प्रभावयेत् ।
वैपाकिकानां हरणं तेन कायेन सर्वथा ॥
सर्वद्रव्यापहरणं बुद्धबोधिप्रसाधकम् ।
चिन्तामणिः समस्तेन द्रव्योदधिः प्रपूरितः ॥
मोहकुलस्य तत्त्वोऽयं समयः परिकीर्तितः ।
मायादेहोऽमितायुः स्यात् तत्र स्कन्धादिपूरणम् ॥
प्रज्ञापारमितायुक्तान् स्कन्धादीन् तत्र कारयेत् ।
चतुःशून्यसमायोगात् कुर्याद् बोधिनयोत्तमम् ॥
संवृतिः परमार्थश्च द्वयेन्द्रियमिहेन्दनात् ।
युगनद्धसमाख्यातस्तत्प्रयोगस्तदद्वयम् ॥
तत्समापत्तियोगेन सर्वांस्तानुपभुञ्जयेत् ।
इदं तत् सर्वबुद्धानां महारागनयोत्तमम् ॥
अथ भगवान् विश्वः त्रिवज्राभेद्यजिनात्मकः ।
वज्रसिद्धिप्रणेता वै वचनमिदमब्रवीत् ॥

पारुष्यादि यदश्राव्यं स्कन्धाद्यभाववाचकः ।
तदर्थमभ्यसेद् योगी लघु बोधिमवाप्नुयात् ॥

( 7 )

[1]आकाशकल्पनायोगैः स्कन्धमहाटवी मताः ।
अस्थानस्थितियोगेन प्रदेशे महतालये ॥
संभोगकल्पवृक्षेऽस्मिन् विविधे सिद्धिपुष्पिते ।
निर्माणफलसंशोभे सम्यक्संबोधिपर्वते ॥
निःस्वभावविजने रम्ये साध्यं तद् वज्रसंज्ञकम् ॥

## कर्मान्तविभागः

( 1 )

[2]प्राङ्महीं सलिलं गच्छेज्जलं गच्छति पावकम् ।
पावको वायुमन्वेति वायुर्विज्ञानमाविशेत् ॥
विज्ञानं धारणां त्वित्थं प्रभास्वरमथाविशेत् ॥

## [3]गुह्येन्द्रतिलकम्

( 1 )

[4]उत्सृज्य रत्नोज्ज्वलपद्ममध्यतः
संगुह्य मूर्तिः सकलं जिनानाम् ।
अभिषिञ्च्य मूर्ध्नाऽमलरत्नवर्षै-
र्विशुद्धवज्रोद्भवज्ञानतोयैः ॥

---

1. गु. स. प्र., पृ. 107
2. गु. स. प्र., पृ० 118
3. ज्ञानसिद्धि ( पृ० 141 ) में गुह्येन्दुमणितिलकतन्त्रराज के तीन श्लोक उद्धृत हैं। यह ग्रन्थ उससे अभिन्न प्रतीत होता है। 'धीः' के प्रथम अंक ( पृ० 65 ) में इनको अद्वयसमताविजय तन्त्र के वचन मान कर उद्धृत किया गया है। इस ग्रन्थ के हस्तलेख की सूचना डॉ० प्रबोधचन्द्र बागची के दोहाकोश की प्रस्तावना से मिलती है। उसको देखने पर ही सही स्थिति की जानकारी मिल सकती है।
4. गु. स. प्र., पृ० 79

## [1]देवेन्द्रपरिपृच्छा

( 2 )

[2]किमर्थमेवमित्येतत् कस्मादादौ प्रयुज्यते।
किमिदं सौगतं वाक्यं किं वा श्रावकभाषितम्॥
एतन्मे संशयं सर्वमपनेतु भवान्तकः॥

श्रुत्वा वाक्यं सुरपतेस्तद्धर्मगुणभावितम्।
साधुकारं ततो दत्त्वा भगवानिदमब्रवीत्॥
आदावेवमिति प्रोक्तं यदर्थं सर्वदर्शिना।
तत् शृणु त्वं सुरपते यथावदनुपूर्वशः॥

धर्मस्कन्धसहस्राणां चतुरशीतिसंख्यया।
सर्वाश्रियं पिता माता द्व्यक्षरं कथितं तथा॥
एकारस्तु भवेन्माता वकारस्तु पिता स्मृतः।
बिन्दुस्तत्र भवेद् योगः स योगः परमाद्भुतः॥

एकारः पद्ममित्युक्तं वकारो वज्रमेव च।
बिन्दुस्तत्र भवेद् बीजं तत्प्रसूतं जगत्त्रयम्॥
एकारस्तु भवेत् प्रज्ञा वकारः सुरताधिपः।
बिन्दुश्चानाहतं तत्त्वं तज्जातान्यक्षराणि च॥

यो विजानाति तत्त्वज्ञो धर्ममुद्राक्षरद्वयम्।
स भवेत् सर्वसत्त्वानां धर्मचक्रप्रवर्तकः॥
योऽविदित्वा पठेन्नित्यमक्षरद्वितयं जनः।
स बाह्यो बुद्धधर्माणां ध्वनिवद् भोगवर्जितः॥

एवं द्विरक्षरं माया सर्वज्ञोऽत्र व्यवस्थितः।
आदौ सद्धर्मशास्त्राणां तदेवं प्रतिगीयते॥
तस्मात् सुराधिप शक्र यदीच्छेत् शाश्वतं पदम्।
सद्धर्मो गुरुः कर्तव्यः स्मर मया द्विरक्षरम्॥

---

1. सुभाषितसंग्रह, पृ. 76 में देवेन्द्रपरिपृच्छातन्त्र के नाम से यह उद्धृत है।
2. गु. स. प्र., पृ. 12-13

## [1]प्रज्ञासूत्रम्

( 1 )

[2]धाराऽमृतमयी नित्यं या मूर्ध्नि वर्षते ध्रुवम् ।
पीत्वा [भवति] योगीन्द्रो जरामृत्युविनाशकः ॥
यथैवोत्पलनालेन तोयमाकर्षते नरः ।
एवमुपजीवयेत् जीवेद् योगी महाबलः ॥

## [3]मूलतन्त्रम्

( 3 )

[4]जिह्वां तालुगतां कृत्वा नासिकाग्रं तु चिन्तयेत् ।
सूक्ष्मवज्रसुखस्पर्शात् भवेच्चित्तं समाहितम् ॥

## [5]मायाजालतन्त्रम्

( 1 )

[6]अ[कृ]त्वाऽऽचार्यनिन्दां वै स्वप्नेऽपि दर्शनं भवेत् ।
ये वाऽऽचार्यनिन्दकास्ते ग्रस्ता विघ्नविनायकैः ॥
क्रूरकर्मा दुरात्मानो वर्जनीयाः सदा भुवि ॥

---

1. सुभाषितसंग्रह, पृ. 43 पर प्रज्ञातन्त्र के तीन वचन मिलते हैं। उससे यह ग्रन्थ अभिन्न हो सकता है । अथवा प्रज्ञापारमिता का भी यह कोई संस्करण हो सकता है ।
2. गु. स. प्र., पृ. २०८
3. 'धीः' द्वितीय अंक, पृ. 58 की तीसरी टिप्पणी देखिये । सुभाषितसंग्रह, पृ. 81 पर उद्धृत मूलसूत्र इससे भिन्न ही होना चाहिये ।
4. गु. स. प्र., पृ. 208
5. साधनमाला के अनुसार ( पृ. 378 ) 16 हजार श्लोकों का यह महायोग तन्त्र है । नामसंगीति इसका उसी तरह एक भाग है, जैसे विष्णुसहस्रनाम महाभारत का ।
6. गु. स. प्र., पृ. 47

( 2 )

[1]योगस्तु त्रिविधो ज्ञेयोऽधिष्ठानः परिकल्पितः ।
निष्पन्नो चित्तबिम्बस्य योगो बुद्धैस्तु वर्णितः ॥
अधिष्ठानमात्राहङ्कारयोगोऽधिष्ठान उच्यते ।
बोधिचित्तविशुद्धिस्तु मन्त्रबीजोदयो महान् ॥
क्रमनिष्पन्नबिम्बस्तु मुद्रागणैस्तु कल्पितः ।
तत्कल्पितेति कथितो योगः कल्पित उच्यते ॥
सर्वाकारवरोपेतः स्फरेत् संहारकारकः ।
झटिति ज्ञाननिष्पन्नो योगो निष्पन्न उच्यते ॥

( 3 )

[2]आचार्यः कथं द्रष्टव्यः सर्वबुद्धसमो गुरुः ।
सर्ववज्रधरो राजा रत्नकेतुस्तथागतः ॥
आचार्यस्य गुणा ग्राह्या दोषाश्च न कदाचन ।
गुणग्रहणं सिद्धिः स्याद् दोषाणां सिद्धिहानितः ॥
तस्मात् सर्वप्रयत्नेन बुद्धत्वफलकाङ्क्षिभिः ।
पूज्योऽसौ भक्तिमता सर्वैरचिन्त्यफलदायकः ॥

## [3]लाक्षीभट्टारिका

( 1 )

[4]कल्याणमित्रमुपनिसृत्य बुद्धबोधिमिति ।

## [5]वज्रमाला ( महायोगतन्त्रम् )

( 2 )

[6]शृणु त्वं महासत्त्व नान्यचित्तेन संस्मरेत् ।
वज्राचार्यस्य कायेऽस्मिन् क्रमः कायजिनस्थितिः ॥

---

1. गु. स. प्र., पृ. 119
2. ,, ,, ,, पृ. 216
3. यह नाम एक लाख श्लोक वाली प्रज्ञापारमिता के लिये प्रयुक्त हो सकता है ।
4. गु. स. प्र., 216
5. पृ० 17 पर भी यहां इस तन्त्र को स्मरण किया गया है । उससे प्रतीत होता है कि इसमें भी "एवं मया श्रुतम्—एकस्मिन् समये" इत्यादि वाक्य के प्रत्येक वर्ण की यह व्याख्या की गई है ।
6. गु. स. प्र., पृ. 27-28

प्रथमं कायवज्रेण रूपस्कन्धेन संस्थितः ।
अनुरागणवज्रेण वेदनास्कन्धेन संस्थितः ॥
वाग्वज्रेण भगवान् संज्ञास्कन्धेन संस्थितः ।
सर्वप्रजनवज्रेण संस्कारस्कन्धेन संस्थितः ॥
चित्तवज्रेण भगवान् विज्ञानयन्त्रसंस्थितौ ।
मांसादि पृथिवीधातुर्भगवती लोचना स्थिता ।
शोणितादिर्जलधातुर्भगवती मामकी स्थिता ॥
उष्णादितेजोधातुर्भगवती पाण्डरवासिनी स्थिता ।
प्रेरणादिमरुद्धातुस्तारा भगवती स्थिता ॥
नेत्रद्वयेन्द्रियं तस्य क्षितिगर्भस्तथागतः ।
श्रोत्रद्वयेन्द्रियं तस्य वज्रपाणिस्तथागतः ॥
घ्राणस्थितेन्द्रियं तस्य गगनगञ्जस्तथागतः ।
जिह्वास्थितमिन्द्रियं तस्य लोकेश्वरस्तथागतः ॥
मनसि स्थितमिन्द्रियं तस्य मञ्जुघोषस्तथागतः ।
चतुर्धातुमयं पिण्डं शरीरं तु संज्ञितम् ।
सर्वनीवरणविष्कम्भिस्तथागतस्तत्र तिष्ठति ।
सर्वसन्धिशरीरस्य समन्तभद्रस्तथागतः ॥
सर्वस्नायुशरीरस्य मैत्रेयस्तथागतः ।
दक्षिणे भुजमूले तु यमान्तकस्तथागतः ॥
वामे च भुजमूले तु अपराजितस्तथागतः ।
मुखपद्मे संतिष्ठते हयग्रीवस्तथागतः ।
गुह्यप्रदेशे तिष्ठति अमृतकुण्डलिस्तथागतः ॥
दक्षिणबाहौ तिष्ठति अचलोऽसौ तथागतः ।
वामबाहौ तिष्ठति टक्किराजस्तथागतः ॥
दक्षिणजानौ च तिष्ठति नीलदण्डस्तथागतः ।
वामे जानौ च तिष्ठति महाबलस्तथागतः ॥
स्वशीर्षमूर्ध्नि तिष्ठति चक्रवर्ती तथागतः ।
अधःपादे च तिष्ठति सुम्भराजस्तथागतः ॥

समस्ताश्चैव कायेऽस्मिन् सर्वतथागताः स्थिताः।
कायमण्डलमित्युक्तं वज्राचार्यस्य कायिकम्॥
एते सकलसंबुद्धाः समस्ता बुद्धकायिकाः।
प्रवेशयन्ति निर्वाणं वज्री संस्कृतदेशनम्॥
शीघ्रं निर्वासि भगवन् परिपक्वकुशलो भवे।
तस्माद् वज्रगुरोः काये जिनाः सर्वे प्रतिष्ठिताः॥
पश्चात्कालं महासत्त्व शृणु हे अमोघदर्शक।
सदा च सर्वसत्त्वैश्च गुरुः सेव्यः प्रयत्नतः॥
तथाऽमोघदर्शना महाबोधिसत्त्वा महायशाः।
तुष्टाः प्रमुदिता हृष्टाः प्रणम्याग्रपतिताः॥

(3)

[1]त्रैधातुकसमं नास्ति सारभूतं स्वजीवितम्।
पश्यति स्वपुरं भास्वत्प्रसंख्यायुतधातुकम्॥
त्रधातुके परं नास्ति सारभूतं स्वजीवितम्।
जीवितं पश्यति स्वप्नं अथवा यस्त्रिधातुकम्॥

(4)

[2]नासाग्रे सर्षपं नाम प्राणायामस्य कल्पनात्।
प्राणायामे स्थिताः पञ्चरश्मयो बुद्धभावतः॥
ऊर्ध्वं प्राणाद् विनिष्क्रान्ता वामदक्षिणद्वन्द्वतः।
स्तब्धश्चेति चतुर्धा स्याद् वेला त्वाध्यात्मिकी स्मृता॥
स्वमन्त्राधारयोगेन दिवा रात्रौ च सर्वतः।
विहरेदर्धयामिका वेला परिपाल्या यथाक्रमम्॥

## वज्रामृतम्

(2)

[3]स्वाहाकारस्तु मामक्याः सर्वसिद्धिप्रदायिका।

1. गु. स. प्र., पृ. 30–31
2. „ „ „ पृ. 57
3. „ „ „ पृ. 149

## वज्रोष्णीषतन्त्रम्

( 1 )

[1]मृत्युनामविकल्पेन प्रज्ञापारमितानया।
प्रज्ञापारमिता जातिः प्रज्ञापारमिता स्मृतिः।
प्रज्ञापारमिता बोधिः प्रज्ञापारमितालया।
प्रज्ञापारमिता मुक्तिः सर्वाशापरिपूरकः ॥

( 2 )

[2]ॐकारसंयुक्तश्चादावन्ते स्वाहाभिसंयुतः।
शान्तिकर्मणि सर्वोऽयं विज्ञेयो मन्त्रवादिभिः॥

## व्याख्यातन्त्रम्

( 1 )

[3]सन्ध्यायभाषा न च सन्ध्याभाषं
नेयार्थमर्थं न च नेयमर्थम्।
यथारुतं नैव यथारुतं च
षट्कोटिकायं खलु योगतन्त्रे॥

( 2 )

[4]मया श्रुतमिति प्रोक्तं चक्रवर्तिस्वरूपिणा।
बीजरूपेण यत् स्पृष्टं देवताचक्रमुत्तमम् ॥
परमानन्दकालोऽसौ एकः समय उच्यते।
अष्टैश्वर्येण भगवान् सदा सुखपदे स्थितः ॥
सर्वंतथागताः प्रोक्ताः पञ्चस्कन्धा जिनैरिह।
तदात्मकायवाक्चित्तो हृद्वज्रोऽसौ महासुखः ॥

---

1. गु. स. प्र. पृ. 70
2. ,, ,, ,, पृ. 143
3. ,, ,, ,, पृ. 10
4. ,, ,, ,, पृ. 13–14

योषित्सु संस्कृता मुद्रा भगं पद्मं सुसंस्कृतम् ।
विजहार स्थितस्तत्र बिन्दुरूपेण वज्रधृक् ॥

( 3 )

[1]स्कन्धा एते हि बुद्धास्यं बोध्यर्थप्रत्ययोद्भवाः ।
तेऽपि तथागताः ख्यातास्तथताद्वययोगतः ॥

( 4 )

[2]ओमिति प्रथमं ज्ञेयं द्वितीयो धर्मसंज्ञितः ।
तृतीयो धात्विति प्रोक्तः स्वभावाख्यश्चतुर्थकः ॥
आत्मकः पञ्चमो ज्ञेयः स्यादहं षष्ठयोगतः ।
उच्चार्येदं ततो मन्त्रं भावयेद् भावनात्मकः ॥

( 5 )

[3]अनादिनिधनं योगं सुसूक्ष्ममिति कल्पयेत् ।
अव्यक्तव्यक्तसंयोगं निःस्वभावस्वभावजम् ॥
प्रकृतिसिद्धमाद्यैकमेकानेकविवर्जितम् ।
प्रतीत्योत्पादधर्माख्ये सर्वभावैकसंभवम् ॥
आत्मानमीदृशं कृत्वा संलिखेद्धर्ममण्डलम् ।
रक्तकृष्णं तथा पीतं सितं चैव समासतः ॥
तुर्यंतुर्यैकसंयोगात् संलिखेत् पाण्डरादिकम् ।
तासां मध्ये स्वदेवत्यं तुर्ययोगपरमं परम् ॥
ऊर्ध्वं तिर्यक्समाधस्तात् पाण्डरादि यथायथम् ।
अग्निवायव्यमाहेन्द्रवारुणे प्रतिमण्डले ॥

( 6 )

[4]सर्वाङ्गं भावनातीतं कल्पनाकल्पवर्जितम् ।
मात्राबिन्दुसमातीतं एतन्मण्डलमुत्तमम् ॥

---

1. गु. स. प्र., पृ. 25
2. ,, , पृ. 37
3. ,, , पृ. 39-40
4. ,, , पृ 45

(7)

[1]स्कन्धादिनिस्वभावत्वं ये कुर्वन्ति शमथोदितम् ।
प्राणातिपातिनस्ते स्युरग्रयानव्यवस्थिताः ॥
अध्यात्म्यं च तथा बाह्यं प्रत्ययोद्भवदेशकाः ।
मृषावादरतास्ते स्युरस्थानस्थितियोगिनः ॥
सम्यक्संबुद्धज्ञानं यद् द्रव्यं तदभिधीयते ।
तदाहरणशीला ये परद्रव्यरता मताः ॥
तथतैकस्वभावा ये तथतानित्ययोगिनः ।
ते ते कामरताः सत्त्वाः श्रेष्ठाः स्युरग्रसाधने ॥
त्रस्यते शून्यतामोहान्मूत्रमिन्द्रियमुच्यते ।
विषयाविति विख्याता भोक्तारः शमनास्तयोः ।
महायानाग्रधर्मेऽस्मिन् भव्यास्ते खलु साधने ॥

(8)

[2]अथाक्षोभ्यो महावीरः कायवाक्चित्तगुह्यकम् ।
समाधिं तु समापद्य चित्ताधिष्ठानसंज्ञकम् ॥
उदाजहार मन्त्रं स ओमित्यादि प्रकीर्तितम् ।
सर्वतथागतेति द्विगुणाख्यापरिकल्पितम् ॥
चित्तवज्रेति द्विद्विसंयुक्तं स्वभावात्मकपञ्चमम् ।
अहं षष्ठाभिधाने स्यात् षट्कायत्रिकसंज्ञिकम् ॥
अथ वैरोचनः श्रीमान् विरजवज्रसंज्ञिकम् ।
समाधिं तु समापद्य कायाधिष्ठानकं वदेत् ॥
ओमिति ब्रह्मणाख्यातं सर्वताथागताद्विकम् ।
कायरागगतो ह्येष वज्रवेदः प्रकीर्तितः ॥
स्वभावात्मककामः स्यात् तदहं कार्तिक उच्यते ।
सन्ध्याय कलितं सम्यक् प्रज्ञाभेदेन भेदयेत् ॥
अथामिताभसंज्ञी तु समताद्वयवज्रकम् ।
समाधिं च समापद्य वागधिष्ठानकं वदेत् ॥

---

1, गु. स. प्र., पृ. 47-48
2. ,, , पृ. 52-53

ओमित्यादि समाख्यातं सर्वताथागताद्विकम् ।
वागिति त्रिगुणं ज्ञेयं युगं वज्रसंज्ञकं भवेत् ॥
स्वभावात्मककामाख्यमहमिति स तु स्मृतः ।
त्रयश्चैते समाख्याताः प्रत्येकं षट् त्रिकोदिताः ॥
क्रमव्यतिक्रमं चोक्तं स्याच्चित्तकायवाक्तथा ।
त्रिवज्रसंज्ञिनो जाता आधिपत्यैकधर्मतः ॥

( 9 )

[1]रूपं शब्दं गन्धं रसं स्प्रष्टव्यं धर्मधातुकम् ।
कृत्वा तन्निस्वभावं स्याद् बुद्धपूजा तदुत्तमा ॥
चक्षुरादिज्ञानसम्भूतैः पञ्चाभिज्ञोपशोभितैः ।
एभिः पञ्चोपहाराख्यैर्लघु बुद्धत्वमाप्नुयात् ॥

( 10 )

[2]पाण्डरादिजापः प्रोक्तः पञ्चविंशत् शतद्वयम् ।
चतुर्गुणितं सम्यक्चतुर्योगं शतं नव ॥
नवशतं तु यद् दृष्टं चतुर्विंशत्परिक्रमैः ।
प्रत्युत्पादाद् भवेत् तस्य द्वयमुतं शतषोडशम् ॥

( 11 )

[3]अथ तथागते सोऽपि भाषते गुह्यमुत्तमम् ।
सर्वचर्याग्रसंशोद्धा सर्वसत्त्वार्थभाषकः ॥
क्षणं लवं मुहूर्तं च पक्षमासाब्दकालकम् ।
त्रिसंख्यैककालाख्यं क्षणमेकं विधीयते ॥
षण्मासाख्यं तदेव स्यात् संभोगं निस्वभावतः ।
क्षणैकमुद्भवेच्छस्तं त्र्यध्वातीतं च भावतः ॥
रूपशब्दरसैर्युक्तं षण्मासं भावयेत् कृती ।
कृत्वा वै स महापूजां गुह्यं तत्त्वं विभावयेत् ॥

---

1. गु. स. प्र., पृ. 54
2. ,, , पृ. 58
3. ,, , पृ. 60–61

विषयेन्द्रियनिःसत्त्वं विण्मूत्राहारकृत्यकम् ।
कुर्वन्ति तन्मयां सिद्धिं महारं निर्विकल्पकम् ॥
तत्त्वानुत्तरमेवेदं बोधिचित्तैकसंभवम् ।
सिद्ध्यते निर्विकल्पार्थमनाविलमसंस्कृतम् ॥

मामिति मामकी प्रोक्ता समभिसंबोधिसंज्ञकम् ।
तत्त्वध्यानप्रीतिकाहारं मांसं चेति तदुच्यते ॥
आकाशानन्तयोगाश्वमहामांसं तु तद्भवेत् ।
त्रिवज्रं सिद्ध्यते क्षिप्रं रहस्यं परमं पदम् ॥

महासमयहस्त्यश्वं तथा श्वानादिमांसकम् ।
स्कन्धादिकुलभेदेन यदुक्तं समसंख्यतः ॥
उद्योगाद्वयमाहारं ध्यानप्रीत्यैकसंज्ञिनाम् ।
कवेलिकः स्वरूपं स्यात् लोकोत्तरं च लौकिकम् ॥

लोकोत्तरतमा ये च निर्विकल्पविशारदाः ।
तथतैकस्वभावास्ते संसारेतरवर्जिताः ॥
प्रिया भवन्ति बुद्धानां योगेनानेन सुव्रताः ।
धीमतां बोधिसत्त्वानां बोधिं शीघ्रमवाप्नुयात् ॥

कामधात्वीश्वरा लोके भवन्ति पदयोगिनः ।
तेजस्विनो बलाढ्याश्च कान्तिमान् प्रियदर्शनाः ॥
वशं कुर्वन्ति ते लोकं दर्शनेनैव चोदकाः ।
रहस्यं तदिदं श्रेष्ठं बुद्धानां बोधिमुत्तमम् ॥

गुह्यमन्त्रमिदं तत्त्वं त्रिवज्रालङ्घनं परम् ।
सर्वताथागतं श्रेष्ठं समयं समयोत्तमम् ॥

( 12 )

[1]अध्यात्मं च तथा बाह्यमुभयानुपलब्धितः ।
रूपादि त्रिविधं तत् स्याद् देवतानां निवेदयेत् ॥

---

1. गु. स. प्र., पृ. 66

( 13 )

[1]सर्वबुद्धोषिते रम्ये भगे शान्तैकसंज्ञिते ।
स्वं तत्त्वाद्वयसंभूतं वज्रं तत्रैव योजयेत् ॥
बुद्धानुस्मृतिसंयोगं भगे लिङ्गं प्रकीर्तितम् ।
प्रक्षेपाद्वययोगः स्याद् बुद्धबिम्बं विभावनम् ॥
ततो विस्फारयेद् धीमान् रोमकूपाग्रसंस्थितम् ।
बुद्धमेघैः स्फरेत् तत्र मण्डलैस्तु विशेषतः ॥

( 14 )

[2]शान्तिकं पौष्टिकं चैव शुक्लपक्षे तु कारयेत् ।
वश्याभिचारकर्मादि कृष्णपक्षे समारभेत् ॥
उत्तराभिमुखः शान्ति पौष्टिकं प्राङ्मुखस्तथा ।
याम्यां तु रौद्रकर्माणि वश्याकर्षणं पश्चिमे ॥
आग्नेय्यां मारणं चैवमैशान्यां द्वेषणक्रियाम् ।
वायव्यां स्थानचलनमैशान्यां स्तम्भनं भवेत् ॥
शान्तिके शुक्लवर्णं तु पीतवर्णं तु पौष्टिके ।
वश्याकर्षणयो रक्तं कृष्णवर्णं तु मारणे ॥
शान्तिकं मैत्रचित्तेन हर्षचित्तेन पौष्टिकम् ।
रागचित्तेन वश्यं तु क्रोधचित्तेन मारणम् ॥
प्रदोषे शान्तिकं कुर्यात् प्रत्यूषे पौष्टिकं तथा ।
वश्याभिचारुकं कर्म मध्याह्ने चार्धरात्रिके ॥

( 15 )

[3]ज्ञानं मोक्षाय सत्त्वानां मन्त्राणां सिद्धिसाधने ।
शान्तिपौष्टिककार्ये च तथा वश्याभिचारुके ॥
अग्राह्यो भगवान् शान्तः चित्तधातुस्तथागतः ॥
यथा पुष्पे भवेद् गन्धः तथा सत्त्वहृदि स्थितः ।
विहरेदर्धयामिकां वेलां परिपाट्या यथाक्रमम् ॥

---

1. मु. स. प्र., पृ. 66
2. ,, , पृ. 142
3. ,, , पृ. 142–143

अग्निवायव्यमाहेन्द्रवारुणे प्रतिमण्डले ।
रक्तां कृष्णां तथा पीतां सितां चैव समासतः ॥

## [1]सन्ध्याव्याकरणव्याख्यातन्त्रम्

(4)

[2]इदं नयोत्तमं प्राप्य गुह्यकाधिपतिर्बुधाः ।
उत्तानार्थं समासाद्य ते चोन्मार्गे पतन्ति हि ॥
योगिनो वयमित्येवं वदन्ति प्रहर्षान्विताः ।
अभिमानरता नित्यं मायाकृतकधर्मिणः ॥
समाजं ते न जानन्ति कुर्वन्ति समयादिकम् ।
न रक्षयन्ति गुह्यं ते प्रकाशयन्ति सर्वतः ॥
साक्षाद् बुद्धवदाचार्यमिन्द्रं ते पर्युपास्य च ।
क्षणाद् द्वेषं प्रकुर्वन्ति तथैवानुनयं क्षणात् ॥
अगम्यं चैव गच्छन्ति मातरं भगिनीं सुत[ाम्] ।
मातापितृवधं चैव तथान्यप्राणिघातकम् ॥
मृषावादं वदन्त्येव चौर्यं चैव विशेषतः ।
परदारांश्च गच्छन्ति कुर्वन्त्यन्यच्च गर्हितम् ॥
समाधिं ते न जानन्ति तथताज्ञानसंभवम् ।
स्वल्पमात्रेण दोषेण कुर्वन्त्यप्यभिचारकम् ॥
योगप्रयोगहीनाश्च न च सिद्ध्यन्ति मन्त्रिणः ।
बाह्यशास्त्ररता नित्यं तत्प्रयोगैकनैपुणाः ॥
स्वसमयं परित्यज्य भवन्त्येव निरङ्कुशाः ।
मन्त्रमुद्राप्रयोगेण जीविकां कल्पयन्ति ते ॥

---

1. सन्ध्याव्याकरण के तीन वचन वसन्ततिलकटीका में उद्धृत हैं । इनका संग्रह 'धीः' के द्वितीय अंक, पृ० 60 पर कर दिया गया है । सन्ध्याव्याकरण को यहाँ व्याख्यातन्त्र कहा गया है । सन्ध्याव्याकरण और व्याख्यातन्त्र एक ही ग्रन्थ के दो नाम हो सकते हैं । किसी निश्चय के अभाव में यहाँ इन दोनों के बचन अलग-अलग संगृहीत किये गये हैं ।

2. गु. स. प्र., पृ. 11

व्याख्यानं च करिष्यन्ति यत्र लब्धिर्भविष्यति ।
एतेषां संग्रहं कर्तुं गुह्यं सन्ध्यायभाषितम् ॥

( 5 )

[1]सर्वबुद्धोषिता या वा भूमिः स्यात् सा त्रयोदशी ।
सा च योषित् समाख्याता तद्धर्मं भग उच्यते ॥

( 6 )

[2]समयानुस्मृतिभिस्तस्माद् ब्रह्मामृतं क्षरेद् भृश[म्] ।
निस्वभावैकसंयोगात् फ्विद् विधिना बुधः ॥
मारणं निःस्वभावाख्यं व्यूहं ताथागतं महत् ।
अनेन मारयेद् धीमान् सुतरां सिद्धिमावहेत् ॥

1. गु. स. प्र., पृ. 19
2. ,, , पृ. 70

# बौद्ध पारिभाषिक शब्दों का अभिप्राय

—व्रजवल्लभ द्विवेदी, ठिनलेराम शाशनी—

[ इस योजना के स्वरूप पर 'धीः' के प्रथम अंक में प्रकाश डाला जा चुका है। अब तक के अंकों में अनेक ग्रन्थों से विशिष्ट पारिभाषिक शब्दों की व्याख्याएं संकलित की गई हैं। अब इस अंक में गुह्यसमाजतन्त्र की चन्द्रकीर्ति कृत प्रदीपोद्योतन व्याख्या से पारिभाषिक व्याख्याओं का संकलन किया जा रहा है। इनमें सात प्रकार के अलंकारों की व्याख्या अपने में अनोखी है। ]

**अक्षोभ्यः**

आकाशवच्चित्तं यस्य स आकाशचित्तोऽक्षोभ्यः, सुविशुद्धधर्मधातुस्वभावत्वात्।

( गु० स० प्र०, पृ० 51 )

**अग्निमण्डलम्**

अग्निमण्डलं कण्ठपद्मस्थम्। तस्योदये रक्तरश्मिर्निर्गत्यार्धयामं तिष्ठति। तदा वश्याकर्षणं कुर्यात्। ( गु० स० प्र०, पृ० 143 )

**अनुत्पादप्रयोगः**

अनुत्पादः परमार्थसत्यम्। तस्मिन् मनोमयकायस्य प्रवेशोऽनुत्पादप्रयोगः।

( गु० स० प्र०, पृ० 31)

**अनुस्मृतिः**

अनुस्मृतिरिति सम्पादितबुद्धकायस्य अनु पश्चात् परमार्थसत्यगमनम्, तस्य स्मृतिस्तदधिगमः। ( गु० स० प्र०, पृ० 69 )

**अभिध्या**

अभिध्या परद्रव्याभिलाषः। ( गु० स० प्र०, पृ० 206 )

**अमिताभः**

धर्माः पद्मलीनास्तेषामग्रः प्रत्यवेक्षणाज्ञानात्मकोऽमिताभः। ( गु० स० प्र०, पृ० 51 )
अमितमप्रमाणमायुर्यस्माल्लभ्यते सोऽमितायुः समताद्वयप्रत्यवेक्षणाज्ञानात्मकोऽमिताभः।

( गु० स० प्र०, पृ० 52 )

**अमृतम्**

अमृतं शुक्रमित्युक्तं तत्प्रसूतं जगत्त्रयम्। ( गु० स० प्र०, पृ० 56 )

**अमोघसिद्धिः**

सकलजगदर्थाश्चर्याः, तेषां पदं प्रतिष्ठा कृत्यानुष्ठानज्ञानस्वभावोऽमोघसिद्धिः।

( गु० स० प्र०, पृ० 51 )

**आकाशपदयोगः**

आकाशं परमार्थसत्यम्, पदं संवृतिसत्यम्। तयोर्योग एकीभावः। ( गु० स० प्र०, पृ० 33 )

**आरोलिक्**

आ समन्तात् रोः संसारः, तस्माल्लिक् गच्छतीति आरोलिक्, नेयार्थः। रो इति ज्ञानत्रयम्, तस्मात् परमार्थसत्यं गतवानिति, नीतार्थः। ( गु० स० प्र०, पृ० 24 )

**आनन्तर्यम्**

मातृपितृभिक्षुवधप्रतिमाभेदसद्धर्मप्रतिक्षेपकाख्यानि पञ्च कर्माणि मरणानन्तरं नरकयातनादानन्तर्याणि। अत्रोपचारादानन्तर्यशब्दस्तत्कारिषु वर्तते। प्रभृतिशब्देनोपानन्तर्यपरिग्रहः।

दूषणं मातुरर्हन्त्या नियतिस्थस्य मारणम्।
बोधिसत्त्वस्य शैक्षस्य सङ्घ आपद्वारिहारिका॥
आनन्तर्यसभागानि पञ्चमं स्तूपभेदनम्।
उपानन्तर्याण्येतानि महापापकृता इति॥

(गु० स० प्र०, पृ० 46-47)

**आर्यपथम्**

अतीताद्यर्थानां यथावत् प्रकाशनमार्यपथम्। (गु० स० प्र०, पृ० 171)

**उद्धारः (मन्त्रः)**

टक्कि हूँ जः इति मन्त्र उद्धारसंज्ञकः। तथा चोक्तम्—

स्वाहा नास्ति न चौकारो यस्य स उद्धार उच्यते।

(गु० स० प्र०, पृ० 151)

**एवम्**

धर्मस्कन्धसहस्राणां चतुरशीतिसंख्यया।
सर्वाश्रयं पिता माता द्व्यक्षरं कथितं तथा॥

7

एकारस्तु भवेन्माता वकारस्तु पिता स्मृतः।
बिन्दुस्तत्र भवेद् योगः स योगः परमाद्भुतः॥
एकारः पद्ममित्युक्तं वकारो वज्रमेव च।
बिन्दुस्तत्र भवेद् बीजं तत्प्रसूतं जगत्त्रयम्॥
एकारस्तु भवेत् प्रज्ञा वकारः सुरताधिपः।
बिन्दुश्चानाहतं तत्त्वं तज्जातान्यक्षराणि च॥

(गु० स० प्र०, पृ० 13)

**कबन्धः (मन्त्रः)**

स्वाहास्ति नास्ति प्रणवः कबन्ध इति संज्ञितः।
सर्वकर्मविधौ चायं वज्रोष्णीषे च भाषितः॥

(गु० स० प्र०, पृ० 151)

**कल्पना**

कल्पना बुद्धिविकुर्वणादिक्रिया। (गु० स० प्र०, पृ० 211)

**कामधातुः (षड्विधः)**

चातुर्महाराजकायिकास्त्रयस्त्रिंशद्यामतुषितनिर्माणरतिपरनिर्मितवशवर्तीति षड्विधः कामधातुः। (गु० स० प्र०, पृ० 169)

**कामधात्वीश्वरः**

कामधातुः सर्वाः स्त्रियः, तासु विश्वरमणेश्वरो भवति। (गु० स० प्र०, पृ० 59)

**कामरताः**

तथतैकस्वभावा ये तथतानित्ययोगिनः।
ते ते कामरताः सत्त्वाः श्रेष्ठाः स्युरग्रसाधने॥

(गु० स० प्र०, पृ० 47)

**कामाः**

रूपादीनि कामयन्ति प्रार्थयन्तीति कामाश्चातुर्महाराजकायिकादयो देवाः।

(गु० स० प्र०, पृ० 8.)

**कुलः**

कुः पृथिवी, तान् तद्व्यवस्थितान् सत्त्वान् रत्नदानेन लाति स्वीकरोतीति कुलो रत्नकेतुः।

(गु० स० प्र०, पृ० 68)

**गुह्यपूजा**

द्वयेन्द्रियसमापत्तिलक्षणा तथागतपूजा। (गु० स० प्र०, पृ० 187)

**चर्या**

प्रपञ्चता, निष्प्रपञ्चता, अत्यन्तनिष्प्रपञ्चतेति त्रिविधा चर्या। चरत्यनयेति चर्या।

(गु० स० प्र०, पृ० 46)

सर्वचर्याः प्रपञ्चनिष्प्रपञ्चात्यन्तनिष्प्रपञ्चचर्याः, तासामग्रचर्या भुसुकुचर्या।

(गु० स० प्र०, पृ० 59)

सर्वविकल्पप्रपञ्चापगता चर्या समन्तभद्रचर्या। (गु० स० प्र०, पृ० 73)

सत्त्वसन्तानगतमात्सर्यक्लेशापनयनात्मिका चर्या बोधिचर्या। (गु० स० प्र०, पृ० 81)

लोकविरुद्धेनाविरुद्धेन वा येन प्रकारेण सत्त्वार्थः सम्पद्यते, तेन तेन प्रकारेण मन्त्रिणां यथाशक्त्या प्रवृत्तिर्बोधिसत्त्वचर्या। यदुत या मन्त्रचर्या सा तथागतचर्या। गुरवो येभ्यस्तत्त्वं मन्त्रं कथयन्ति ते मन्त्रा रत्नपुद्गलाः, तेषां चर्या निष्पन्नक्रममधिगम्य पदसमाहितयोगेन चरणं सेयं तथागतचर्या। (गु० स० प्र०, पृ० 86)

**जिनजिग्**

जयनशीला जिना माराः, तान् द्वादशाकारधर्मचक्रेण जयतीति जिनजिक्, नेयार्थः। वज्रोपमसमाधिना चतुर्माराभिभवनाद् जिनजिक्, नीतार्थः। (गु० स० प्र०, पृ० 23)

**ज्ञानप्रदीपः**

ज्ञानमेव प्रदीपो ज्ञानप्रदीपः, अक्षरार्थः। ज्ञानप्रदीपः अक्षोभ्यः, सत्त्वसन्तानेषु ज्ञानालोककरत्वात्, समस्ताङ्गम्। ज्ञानमेव विज्ञानत्रयाभासम्, दशदिगवभासनात्, प्रदीप इव प्रदीपः, गर्भी। ज्ञा अवबोधने, नः प्रतिषेधे वर्तते। अवबोधाभावो यस्मिंस्तज्ज्ञानम्। किं तत्? परमार्थसत्यमनभिलाप्यम्। अशेषतेजांस्यभिभूयानन्तलोकधात्ववभासनात् तदेव प्रदीपः, कोलिकम्। (गु० स० प्र०, पृ० 23)

**तथागताः**

यथा जन्मकाले आगताः, विनाशे तथैव गता इति तथागताः सर्वसत्त्वाः।

(गु० स० प्र०, पृ० 219)

**तन्त्रवित्**

एषां क्रमाणां भेदांस्तु प्रसारविधिना बहून्।
संमीलनं च तेषां वै यो वेत्ति स हि तन्त्रवित्॥

(गु० स० प्र०, पृ० 1)

### तारा

दुःखार्णवात् तारयतीति तारा। व्यथां त्रायत इति तुत्तारा। तुद व्यथने। त्रैट् पालने। शीघ्रकरणे त्वरा। तुर त्वरणे। एतत्पदत्रयमामन्त्रणे। (गु० स० प्र०, पृ० 145)

### तैलम्

तैलं सुरा। (गु० स० प्र०, पृ० 191)

### देवतायोगः

वैरोचनाभिसंबोधितन्त्रेऽपि द्विविधदेवतायोगं निर्दिशति—देवतारूपमपि गुह्यकाधिपते! द्विविधम्—परिशुद्धमशुद्धं च। तत्र परिशुद्धमधिगतरूपं सर्वनिमित्तापगतम्। अपरिशुद्धं सर्वनिमित्तं रूपवर्णसंस्थानं च। तत्र द्विविधेन देवतारूपेण द्विविधकार्यनिष्पत्तिर्भवति। सनिमित्तेन सनिमित्ता सिद्धिरुपजायते। अनिमित्तेनानिमित्ता सिद्धिरिष्टा जिनवरैः। सदा अनिमित्तो स्थित्वा वै सनिमित्तं प्रसाध्यते। तस्मात् सर्वप्रकारेण निर्निमित्तं निषेध्यत इति। (गु० स० प्र०, पृ० 119)

### द्वयेन्द्रियप्रयोगः

सत्यद्वयाद्वैधीकरणेन महावज्रधरनिष्पादनं द्वयेन्द्रियप्रयोगः। (गु० स० प्र०, पृ० 164)

### द्वेषरतिः

द्वेषोऽक्षोभ्यस्तस्मिन् रतिर्द्वेषरतिः, नेयार्थः। द्वेषक्लेशविशुद्धे रतिर्द्वेषरतिः, नीतार्थः। (गु० स० प्र० पृ० ,25)

### निमित्तपञ्चकम्

पृथिव्या अम्भसि लयनान्मरीचिकाकारं प्रतिभासते प्रथमं निमित्तम्। एवमम्भसस्तेजसि लयनाद् धूम्राकारं द्वितीयम्। तेजसो वायौ लयनात् खद्योताकारं तृतीयम्। सूक्ष्मधातोराभासत्रयगमनाद् दीपवदालोकपुञ्जस्वभावं चतुर्थम्। प्रकृत्याभासलयनाद् निरभ्रं गगनवत् सततालोकं प्रभास्वरमात्रं भवति पञ्चमम्। एतानि पञ्चनिमित्तानि निर्वाणं प्रापयन्ति। यथोक्तं कर्मान्तविभागे—

> प्राङ्मही सलिलं गच्छेज्जलं गच्छति पावकम्।
> पावको वायुमन्वेति वायुर्विज्ञानमाविशेत्॥
> विज्ञानं धारणां त्वित्थं प्रभास्वरमथाविशेत्॥

(गु० स० प्र०, पृ० 118)

**निरक्षरम्**

क्षरति नश्यतीति क्षरम्। ततोऽन्यदक्षरम्। तद्विनिर्गतं निरक्षरम्। उत्पादनिरोध-रहितमिति यावत्। (गु० स० प्र०, पृ० 71)

**निरन्तः ( मन्त्रः )**

प्रणवोऽस्ति न च स्वाहा स निरन्तो निगद्यते।

(गु० स० प्र०, पृ० 153)

ओङ्कारादिफट्कारावसानिको निरन्ताख्यो मन्त्रः। (गु० स० प्र०, पृ० 221)

**पक्षः**

पक्षः गुरुदेवताविषये सम्प्रत्ययः। (गु० स० प्र०, पृ० 98)

पक्षः संवृतिः परमार्थश्च। तयोरभ्यन्तरं मध्यम्। किं तत्? सत्यद्वयाद्वैधीकारेण स्थितिः।

(गु० स० प्र०, पृ० 121)

**पञ्चक्रमम्**

उत्पत्तिक्रममादौ स्यान्मन्त्रमूर्तिप्रसाधकः।
चित्तनिध्यप्तिमात्रं तु द्वितीयः क्रम उच्यते॥
तृतीयश्च क्रमो रम्यः संवृतेः सत्यदर्शनम्।
सत्यस्य संवृतेः शुद्धिश्चतुर्थक्रम उच्यते॥
पञ्चमो युगनद्धाख्यो यत् सत्यद्वययोजनम्।
साधनाङ्गमिदं षष्ठं सर्वतन्त्रार्थसंग्रहम्॥

(गु० स० प्र०, पृ० 1)

**पञ्चप्रदीपम्**

मांसग्रहणेन पञ्चप्रदीपपरिग्रहः। (गु० स० प्र०, पृ० 194)

महामांसं पञ्चप्रदीपम्। (गु० स० प्र०, पृ० 195)

**पञ्च बाणाः**

मादन-मोहन-निर्मोहन-मूर्च्छन-निश्चेष्टीकरणमिति पञ्च शराः। (गु० स० प्र०, पृ० 197)

**पञ्च रश्मयः**

पञ्च रश्मयो य र ल व हा इति वाय्वनलादिपञ्चबीजानि। (गु० स० प्र०, पृ० 218)

**पञ्चामृतम्**

विण्मूत्रग्रहणेन पञ्चामृतपरिग्रहः। (गु० स० प्र०, पृ० 194)

विण्मूत्रं पञ्चामृतम्। (गु० स० प्र०, पृ० 195)

**पञ्चोपहारपूजा**

पञ्चोपहाराः पुष्पादयः । तैः पूजा पञ्चोपहारपूजा । (गु० स० प्र०, पृ० 77)

पञ्चोपहाराः पञ्च विषयाः । (गु० स० प्र०, पृ० 219)

**पटलः**

पटो यथा दंशमशकाद्युपद्रवं निवारयति, तथायं तन्त्रार्थः क्लेशकर्मजन्माद्युपद्रवनिवारणात् पट इव पटः, तं लाति गृह्णातीति तद्धारको ग्रन्थसमूहः पटलः । (गु० स० प्र०, पृ० 29)

**पद्मान्तकृत्**

उदकालिप्तपद्मवत् क्लेशैरवलिप्तीकृत्वा तानेव नाशयतीति पद्मान्तकृत्, नेयार्थः । पद्मं योनिः, तस्मिन् द्वयेन्द्रियसमापत्त्युपायेन परमानन्दसुखं करोत्युत्पादयतीति पद्मान्तकृत्, नीतार्थः । (गु० स० प्र०, पृ० 26)

**परद्रव्यरताः**

सम्यक्संबुद्धज्ञानं यद् द्रव्यं तदभिधीयते ।
तदाहरणशीला ये परद्रव्यरता मताः ॥

(गु० स० प्र०, पृ० 47 )

**प्रकृतिः**

प्रकृतिः संवृतिसत्यम् । (गु० स० प्र०, पृ० 33, 71)

**प्रज्ञाधृक्**

प्रविचयलक्षणा प्रज्ञा, तां धारयतीति प्रज्ञाधृक्, नेयार्थः । प्रज्ञा चन्द्राभासः, तां सूक्ष्मधातुना धारयतीति प्रज्ञाधृक्, नीतार्थः । (गु० स० प्र०, पृ० 24)

**प्रज्ञान्तकृत्**

प्रज्ञया क्लेशं नाशयतीति प्रज्ञान्तकृत्, नेयार्थः । विकल्पात्मिका प्रज्ञा, तस्याः प्रभास्वर-प्रवेशेनान्तं करोतीति प्रज्ञान्तकृत्, नीतार्थः । (गु० स० प्र०, पृ० 26)

**प्रज्ञापारमिता**

प्रज्ञा आलोकः ।.... प्रज्ञोपायोपलब्धयः प्रज्ञेत्यभिमताः । तेषां पारमन्तम् इता गता प्रज्ञापारमिता ।....परमार्थसत्यम् । (गु० स० प्र०, पृ० 70)

**प्रभास्वरम्**

प्रभास्वरं परमार्थसत्यम् । (गु० स० प्र०, पृ० 71)

**प्राणातिपातिनः**

स्कन्धादिनिःस्वभावत्वं ये कुर्वन्ति शमथोदितम्।
प्राणातिपातिनस्ते स्युरग्रयानव्यवस्थिताः॥

(गु० स० प्र०, पृ० 47)

**फट्**

फडिति मारणद्योतकं बीजम्। (गु० स० प्र०, पृ० 164)

**बालबुद्धिः**

बालो मञ्जुघोषः, तस्मिन् बुद्धिश्चिन्ता यस्य स बालबुद्धिः साधकः। (गु० स० प्र०, पृ० 197)

**बुद्धपूजा**

रूपं शब्दं गन्धं रसं स्प्रष्टव्यं धर्मधातुकम्।
कृत्वा तन्निःस्वभावं स्याद् बुद्धपूजा तदुत्तमा॥
चक्षुरादिज्ञानसम्भूतैः पञ्चाभिज्ञोपशोभितैः।
एभिः पञ्चोपहाराख्यैर्लघु बुद्धत्वमाप्नुयात्॥

(गु० स० प्र०, पृ० 54)

**बुद्धाः**

बुद्धा अक्षोभ्यादयः। (गु० स० प्र०, पृ० 93)

बुद्धास्त्र्यध्ववर्तिनो जिनाः। (गु० स० प्र०, पृ० 101)

**बोधिः**

सत्त्वान् बोधयत्यात्मस्वरूपमिति बोधिः। ( गु० स० प्र०, पृ० 95 )

बोधिमप्रतिष्ठितनिर्वाणम्। ( गु० स० प्र०, पृ० 139 )

**बोधिसत्त्वाः**

बोधिसत्त्वा मैत्रेयादयः। ( गु० स० प्र०, पृ० 93 )

बोधिः परमार्थः, सत्त्वः संवृतिसत्यम्, ते आत्मा देहो यस्य स बोधिसत्त्वात्मा।....सत्य-द्वयेन परिगृहीतं रूपं बोधिसत्त्वः। ( गु० स० प्र०, पृ० 100-101 )

बोधिः परमार्थसत्यम्, सत्त्वः संवृतिसत्यम्। तयोरद्वयरूपेण यः स्थितः स बोधिसत्त्वो महावज्रधरः। ( गु० स० प्र०, पृ० 109 )

**भगः**

भगः परमार्थसत्यम्। ( गु० स० प्र०, पृ०, 67 )

**भगवान्**

भाग्यसम्पन्नत्वादशेषविपक्षभञ्जनाच्च भगवान् । ( गु० स० प्र०, पृ० 12 )

अष्टगुणैश्वर्ययोगाद् भगवान् । ( गु० स० प्र०, पृ० 18 )

**भूतकोटिः**

आकाशधातुः भूतकोटिः । ( गु० स० प्र०, पृ० 211 )

**मण्डलम्**

मण्डः सारः, तं लाति गृह्णातीति मण्डलम् । चित्तमण्डलम् । ( गु० स० प्र०, पृ० 41 )

मण्डं सारं संवृतिसत्यम्, तं लाति गृह्णातीति मण्डलम्, नेयार्थः । मण्डं सारं परमार्थसत्यम्, तं लाति गृह्णातीति मण्डलम्, यथोक्तं भगवता व्याख्यातन्त्रे—

सर्वाङ्गं भावनातीतं कल्पनाकल्पवर्जितम् ।
मात्राबिन्दुसमातीतमेतन्मण्डलमुत्तमम् ॥ नीतार्थः ।

( गु स० प्र०, पृ० 45 )

मण्डं सारं लाति गृह्णाति स्वीकरोतीति मण्डलम् । ( गु० स० प्र०, पृ० 132 )

**मत्स्यम्**

मत्स्यं भक्ष्याणि । ( गु० स० प्र०, पृ० 191 )

**मन्त्रनयः**

मन्त्र्यते गुरुभिरुपांशु कथ्यते यः स मन्त्रः, तद्विषयचर्या मन्त्रचर्या तां नयति प्रापयतीति नयः सप्तविधः । यदुत—

मण्डलं गणकुण्डं च बलिर्मेलापकक्रमः ।
तत्त्वं सप्तविधाख्यानं स मन्त्रनय उच्यते ॥

( गु० स० प्र०, पृ० 90 )

**मन्त्रवादः**

चतुर्विधो मन्त्रवादः—यदुत मन्त्रसंज्ञा, मन्त्रार्थः, मन्त्रविदर्भणम्, वज्रवाक् स्वरवर्जिता चेति । ( गु० स० प्र०, पृ० 90 )

**महादिव्यम्**

महान्तो लोकोत्तरा वज्रसत्त्वादयो दिव्याः प्रविश्य यस्मिन्नावेशक्षणे तिष्ठन्ति तन्महादिव्यम् ।

( गु० स० प्र०, पृ० 171 )

**महान्**

अत्यद्भुतस्य कर्ता च महानित्यभिधीयते ।

( गु० स० प्र०, पृ० 21 )

**महामुद्रा**

भूर्भुवः स्वः प्रपूज्यत्वान्महतीं मुदं हर्षं द्रवति गच्छतीति महामुद्रा। (गु० स० प्र०, पृ० 96)

**महायानः**

महान्तो बहवः सत्त्वा येन बुद्धत्वं यान्ति स महायानः। ( गु० स० प्र०, पृ० 73 )

**मातृगृहम्**

ब्रह्माणी वैष्णवी रुद्राणी इन्द्राणी कौबेरी वाराही चामुण्डा चेति सप्त लोकमातरः। तासां गृहे श्मशानशून्यागारचतुष्पथैकलिंगैकवृक्षेषु। ( गु० स० प्र०, पृ० 157 )

**माहेन्द्रमण्डलम्**

माहेन्द्रमण्डलं गुदपद्मस्थम्। तस्योदये पीतवर्णरश्मिर्विनिर्गत्यार्धयामं तिष्ठति। तदा पौष्टिकं कुर्यात्। ( गु० स० प्र०, पृ० 143 )

**मुद्रा**

धर्ममुद्रा चिह्नमुद्रा महामुद्रेति त्रिविधा मुद्रा। हूँकारादीन् धर्ममुद्रा। वज्रादीन् चिह्नमुद्रा। अक्षोभ्यादिदेवताचक्रं महामुद्रा। ( गु० स० प्र०, पृ० 42 )

**मूत्रम्**

मूत्रं व्यञ्जनम्। ( गु० स० प्र०, पृ० 191)

**मृषावादरताः**

अध्यात्मं च तथा बाह्यं प्रत्ययोद्भवदेशकाः।<br>
मृषावादरतास्ते स्युरस्थानस्थितियोगिनः॥

( गु० स० प्र०, पृ० 47 )

**मोहरतिः**

मोहो वैरोचनस्तस्मिन् रतिः, नेयार्थः। मोहविशुद्धे रतिर्मोहरतिः, नीतार्थः।

( गु० स० प्र०, पृ० 25 )

**यक्षिण्यः**

मांसमद्यरुधिराद्याहारा यक्षिण्यो मैथुनपराः।

( गु० स० प्र०, पृ० 205 )

**यमान्तकृत्**

यमो नरकस्तस्य भगवान् महाक्रोधसमाधिनाऽन्तं करोति नाशयतीति यमान्तकृत्, नेयार्थः। यमो मोहान्धकारोऽविद्या, तस्य परमार्थसत्येनान्तं करोति नाशयतीति यमान्तकृत्, नीतार्थः।

( गु० स० प्र०, पृ० 26 )

**योगः**

योगस्तु त्रिविधो ज्ञेयोऽधिष्ठानः परिकल्पितः।
निष्पन्नो चित्तबिम्बस्य योगो बुद्धैस्तु वर्णितः॥
अधिष्ठानमात्राहङ्कारयोगोऽधिष्ठान उच्यते।
बोधिचित्तविशुद्धिस्तु मन्त्रबीजोदयो महान्॥
क्रमनिष्पन्नबिम्बस्तु मुद्रागणैस्तु कल्पितः।
तत्कल्पितेति कथितो योगः कल्पित उच्यते॥
सर्वाकारवरोपेतः स्फरेत् संहारकारकः।
झटिति ज्ञाननिष्पन्नो योगो निष्पन्न उच्यते॥

( गु० स० प्र०, पृ० 119 )

**रत्नम्**

रत्नमा संसारस्थायि परमानास्रवमहासुखम्।

( गु० स० प्र०, पृ० 78 )

**रत्नधृक्**

सर्वाशापरिपूरकं रत्नं धारयतीति रत्नधृक्, नेयार्थः। भूतकोटिरत्नं धारयतीति रत्नधृक्, नीतार्थः। ( गु० स० प्र०, पृ० 24 )

**रत्नसम्भवः**

सर्वतथागतानां रत्नं परमार्थबोधिचित्तं, ततः संभवतीति रत्नसंभवः, नेयार्थः। सर्वतथागतानां रत्नं परमार्थबोधिचित्तम्, तस्मात् सम्भवतीति रत्नसम्भवः, नीतार्थः।

(गु० स० प्र०, पृ० 24)

आकाशपथं समताज्ञानं तस्माद् वर्तते निष्पाद्यते तत्संभवतया यः स आकाशपथवर्तको रत्नसम्भवः। (गु० स० प्र०, पृ० 51)

**रागरतिः**

रागोऽमिताभस्तस्मिन् रती रागरतिः, नेयार्थः। रागविशुद्धे रतिः, नीतार्थः।

(गु० स० प्र०, पृ० 25)

**लिङ्गम्**

लिङ्गं संवृतिसत्यम्। (गु० स० प्र०, पृ० 67)

**वज्रधरः**

वज्रम् धारयतीति वज्रधरः (अक्षरार्थः), आदर्शादिज्ञानपञ्चकं तन्मयत्वेन धारणाद् वज्रधरः (समस्ताङ्गम्), मनोमयदेहधारणाद् वज्रधरः (गर्भी), वज्रमद्वयज्ञानं तस्य तन्मयत्वेन धारणाद् वज्रधरः (कोलिकम्)। (गु० स० प्र०, पृ० 55-56)

**वज्रधात्रे(त्वी)श्वरी**

हृदयस्था महादेवी योगिनो योगवाहिनी।
जननी सर्वबुद्धानां वज्रधात्रेश्वरी स्मृता॥

(गु० स० प्र०, पृ० 48, 202)

**वज्रधृक्**

वज्रधृगिति पञ्चाकाराभिसम्बोधिसंसूचकम्। वज्रं धारयतीति वज्रधृक्, नेयार्थः। सत्यद्वयात्मकं वज्रज्ञानं धारयतीति वज्रधृक्, नीतार्थः। (गु० स० प्र०, पृ० 23)

**वज्ररतिः**

वज्रोऽमोघसिद्धिस्तस्मिन् रतिर्वज्ररतिः, नेयार्थः। वज्रज्ञाने रतिः, नीतार्थः।

(गु० स० प्र०, पृ० 25)

**वज्रसमयः**

वज्रसमयो द्वयेन्द्रियसमापत्तिः, गर्भी। वज्रसमयः प्रभास्वरम्, कोलिकम्।

(गु० स० प्र०, पृ० 22)

**वायव्यमण्डलम्**

वायव्यमण्डलं नाभिपद्मस्थम्। तस्योदये कृष्णश्यामवर्णरश्मिर्विनिर्गत्यार्धयामं तिष्ठति। तदा रौद्रकर्म कुर्यात्। (गु० स० प्र०, पृ० 143)

**वारुणमण्डलम्**

वारुणमण्डलं हृत्पद्मस्थम्। तस्योदयकाले श्वेतवर्णो रश्मिर्विनिर्गत्यार्धयामं तिष्ठति। तदा महाशान्तिं कुर्यात्। (गु० स० प्र०, पृ० 143)

**विकुर्वणम्**

तत्रालीढादिना विघ्नचूर्णनं कायविकुर्वणम्। प्रलयमेघनिनादेन मन्त्रोच्चारणं वाग्विकुर्वणम्। सर्वविघ्नेषु शून्यतालम्बनं चित्तविकुर्वणम्। (गु० स० प्र०, पृ० 191)

**विघ्नान्तकृत्**

विघ्नानामन्तं विनाशं करोतीति विघ्नान्तकृत्, नेयार्थः। विघ्नाश्चत्वारो धातवः। ते

क्षयवृद्धिभ्यां शरीरपीडनाद् विघ्नाः, तेषामुपायज्ञानोदयेन विनाशं करोतीति विघ्नान्तकृत्, नीतार्थः । (गु० स० प्र०, पृ० 26-27)

**विट्**

विड् अन्नम् । (गु० स० प्र०, पृ० 191)

**विद्याधरः**

डाकडाकिन्यादिसमयाः, तेषामग्रास्तेषु विद्या तत्साधनमन्त्रः तं धारयतीति विद्याधरः ।
(गु० स० प्र०, पृ० 113)

**विद्यापुरुषः**

सर्वतथागतमन्त्रा ॐकारादयः । तैर्निष्पन्नसमयो महावज्रधरः । तदेव मन्त्रपरायणानां तत्त्वं विद्या प्रज्ञापारमिता तत्समुत्थितपुरुषो विद्यापुरुषः । (गु० स० प्र०, पृ० 106)

**वैरोचनः**

आकाशवत् कायो यस्य तदाकाशकायज्ञानमादर्शज्ञानम्, तस्मात् संभूतो वैरोचनः, तन्मयत्वात् । (गु० स० प्र०, पृ० 51)

आदर्शज्ञानात्मको वैरोचनः (गु० स० प्र०, पृ० 52)

**शुक्रम्**

शुगिति शोकः, तं क्रकच इव भिनत्तीति शुक्रं परमानन्दः । (गु० स० प्र०, पृ० 71)

शुचं शोकं क्रकचवत् पाटयति नाशयतीति शुक्रं मद्यम् । (गु० स० प्र०, पृ० 190)

**श्रावकाः**

पुद्गलनैरात्म्यावरोधेनार्हत्त्वं प्राप्नुवन्ति ये ते श्रावकाः । (गु० स० प्र०, पृ० 204)

**श्रीमान्**

श्रीः लोचना, सा यस्य विद्यते स श्रीमान् । (गु० स० प्र०, पृ० 121)

श्रीः पाण्डरवासिनी तया युक्तः श्रीमान् । (गु० स० प्र०, पृ० 121)

**सप्तरत्नानि**

पद्मराग-इन्द्रनील-वैदूर्य-मरकत-वज्र-मुक्ता-प्रवालमिति सप्तरत्नानि । (गु० स० प्र०, प० 78)

**सप्तालङ्काराः**

पञ्चसंख्य उपोद्घातो न्यायश्चापि चतुर्विधः ।
षट्कोटिकं च व्याख्यानमाख्यानं च चतुर्विधम् ॥

पञ्चमो द्विप्रभेदश्च षष्ठः पञ्चप्रभेदवान् ।
सप्तमो द्विप्रभेदः स्यादलङ्कारः समासतः ॥
(गु० स० प्र०, पृ० 2)

**उपोद्घातः ( पञ्चसंख्यः )**

का संज्ञा अस्य तन्त्रस्य किं निमित्तमिदं कृतम् ।
को वा कर्त्ता प्रमा कास्य किं वा चास्य प्रयोजनम् ॥
तन्त्रस्य नाम संज्ञा स्यान्निमित्तं रागिणो जनाः ।
कर्त्ता तु वज्रसत्त्वोऽस्य परिमाणं तु कीर्त्यते ॥
परिच्छेदोऽथ कल्पश्च खण्डः पटल एव च ।
चतुर्विधं भवेत् तच्च ग्रन्थतश्चापि संख्यया ॥
प्रयोजनं तु गणितं शान्तिकादि क्रियाविधिः ।
अष्टौ च सिद्धयश्चैव बुद्धत्वमपि चोत्तमम् ॥
(गु० स० प्र०, पृ० 2)

**न्यायः ( चतुर्विधः )**

सन्तानश्च निदानं च निरुक्तिर्हेतुरित्यपि ॥
जन्मोत्पत्तिर्मनुष्येषु सन्तान इति कथ्यते ।
अन्तःपुरस्य मध्याच्च निष्क्रमस्तु निदानकम् ॥
संवरो विनयोद्दिष्टो निरुक्तिरिति गद्यते ।
फलाकांक्षी चरेद्धर्मं स हेतुरिति कथ्यते ॥
अयं विरागधर्मस्य चतुर्धा न्यायमिष्यते ।
रागधर्मनये वक्ष्ये प्रस्फुटार्थावबोधनम् ॥
पञ्चबुद्धकुलोत्पत्तिः सन्तान इति कथ्यते ।
पुनरेककुलीभावं निदानं च प्रदर्शितम् ॥
वज्रादिग्रहणं चैव निरुक्तिरिति कथ्यते ।
शृङ्गारादिरसैश्चर्या हेतुरित्यभिधीयते ॥
(गु० स० प्र०, पृ० 2-3)

**षट्कोटिकं व्याख्यानम्**

मन्त्राश्चि च्चि)त्तादतः कायाद् विशुद्धेर्योगवाहतः ।
क्रमशः पञ्चपिण्डार्थान् ज्ञात्वा षट्कोटिमाविशेत् ॥
(गु० स० प्र०, पृ० 1)

षट्कोटिकं च व्याख्यानम् । ( गु० स० प्र०, पृ० 2 )

पुनस्तृतीयोऽलङ्कारः षट्कोटिपदनिश्चयः ।
योगतन्त्रनयोद्दिष्टो मुद्रितार्थप्रबोधनः ॥
सन्ध्यायभाषा-नोसन्ध्या-नेय-नीतार्थभेदतः ।
यथारुतं च नरुतं षट्कोटिरिति कीर्तितम् ॥
प्रच्छन्नदुर्भगानां च नेयार्थं भाषते जिनः ।
सद्भूतार्थप्रकाशाय नीतार्थं भाषते पुनः ॥
विशिष्टरुचिसत्त्वानां धर्मतत्त्वप्रकाशनम् ।
विरुद्धालापयोगेन यत् तत् सन्ध्यायभाषितम् ॥
मण्डलादिप्रकल्पेषु चर्यायां च यथायथम् ।
उत्तानमर्थकथनं तद् यथारुतभाषितम् ॥
कोटाख्यकादयः शब्दा लोकशास्त्रबहिष्कृताः ।
तथागतानां संकेता नरुतं तत्प्रकीर्तितम् ॥
मृद्विन्द्रियाणां सत्त्वानां प्रबोधार्थमतिस्फुटम् ।
तत्त्वस्य कथनं व्यक्तं नोसन्ध्या समुदाहृतम् ॥

(गु० स० प्र०, पृ० 3 )

सन्ध्याभाषा न च सन्ध्याभाषं नेयार्थमर्थं न च नेयमर्थम् ।
यथारुतं नैव यथारुतं च षटकोटिकायं खलु योगतन्त्रे ॥

( गु० स० प्र०, पृ० 10 )

**आख्यानम् ( चतुर्विधम् )**

अक्षरार्थः समस्ताङ्गं गर्भी वाप्यथ कोलिकम् ।
प्रथमस्त्वेक एव स्यात् समस्ताङ्गं द्विभेदकम् ॥
गर्भी च त्रिविधः ख्यातो द्विविधः कोलिको मतः ।
बाह्यशास्त्रविदो नैके शब्दमात्रपरायणाः ॥
तद्व्युत्पत्तिप्रकाशाय अक्षरार्थो निगद्यते ।
सूत्रान्तादौ प्रपन्नानां कौकृत्यविनिवृत्तितः ॥
उत्पत्तिक्रमयोगाच्च समस्ताङ्गं प्रकाशितम् ।
गर्भीति गर्भमस्यास्ति रागधर्मप्रकाशनम् ॥

संवृतेः सत्यसंबोधज्ञानत्रयविवेचनम् ।
प्रभास्वरप्रकाशश्च युगनद्धप्रबोधनम् ।
द्विविधः कोलिकः प्रोक्तः कोलः पर्यन्तवाचकः ॥

(गु० स० प्र०, पृ० 3)

**व्याख्यानम् ( द्विविधम् )**

इच्छेच्छ्रावयितुं वक्ता भूयो द्विविधभेदतः ।
सत्रव्याख्याननिर्दिष्टं शिष्याख्यानं द्वितीयकम् ॥
यथारुतं नसन्ध्या च नेयार्थं वापि योजयेत् ।
अक्षरार्थः समस्ताङ्गं सत्रव्याख्यानमुच्यते ॥
नरुतं नियतार्थश्च सन्ध्याभाषा तथैव च ।
गर्भी वै कोलिकं चापि शिष्यव्याख्यानमिष्यते ॥
क्रमद्वयं समाश्रित्य व्याख्याभेदः प्रदर्शितः ।
व्याख्यातन्त्रानुसारेण विनेयेषु तथागतैः ॥

(गु० स० प्र०, पृ० 4)

**पुद्गलपञ्चकम् ( षष्ठालङ्कारः )**

लोके नियतिसंभूताः सर्वदा श्रवणार्थिनः ।
अनेकाकारबुद्धित्वात् पुद्गलाः पञ्च संमताः ॥
रत्नचन्दनपद्माश्च पुण्डरीकस्तथोत्पलः ।
प्रकृत्या भिन्नसंज्ञास्ते सर्वज्ञेन च भाषिताः ॥
अश्रुत्वा वस्तु निखिलं धारणायां विचक्षणः ।
क्षणाद् विस्मरणं याति प्रख्यातोत्पलपुद्गलः ॥
ग्राह्यं श्रुत्वाधिकं भूरि न शक्नोति प्रकाशि[तु]म् ।
कुण्डी कर्पासवद् भूयः पुण्डरीकाख्यपुद्गलः ॥
श्रद्धावान् जनकारुण्यो विकासहृदयश्रुतेः ।
निष्पर्ववेणुवच्छ्रावी पद्मविख्यातपुद्गलः ॥
अल्पश्रुतिरहङ्कारी निर्मूलं बहुभाषि(ष)ते ।
न शक्योऽनुग्रहं कर्तुं चन्दनाख्यातपुद्गलः ॥
सुशीलो विशदो दक्षः प्रज्ञावानेकसन्धिकः ।
श्रुत्वा प्रकाशयेत् सम्यक् प्रख्यातो रत्नपुद्गलः ॥

पुण्डरीकोत्पलौ चैव पद्मचन्दन एव च।
चत्वारः पुद्गला ह्येते सत्रव्याख्यानपुद्गलाः ॥
निष्पन्नक्रमयोग्यश्च सदाचारविभूषणः।
रत्नपुद्गलनामायं शिष्यव्याख्यानभाजनः ॥
पात्रापात्रं परीक्ष्यैवं पुद्गलज्ञानभेदतः।
व्याख्यानं द्विविधं कुर्याद् वज्राचार्यो विचक्षणः ॥
(गु० स० प्र०, पृ० 4)

**सप्तमालङ्कारः**

एभिः षड्भिरलङ्कारैः सत्यद्वयनिर्णयः।
स सप्तमो ह्यलङ्कारो निष्पन्नक्रमसाधनः ॥
(गु० स० प्र०, पृ० 5)

**समयचतुष्टयम्**

प्राणिनश्च त्वया घात्या इत्यादि समयचतुष्टयं पञ्चमपटलोक्त (पृ० 47-48) सन्ध्याभाषा-व्याख्यानेन ज्ञेयम्। (गु० स० प्र०, पृ० 193)
परस्वहरणमित्यादिसंवरं नवमपटले (पृ० 84) सन्ध्याभाषया विवृतम्।
(गु० स० प्र०, पृ० 202)

**समयमण्डलम्**

समयो महावज्रधरः, तस्य मण्डः सारभूतो विधिः, तं लाति गृह्णातीति समयमण्डलम्।
(गु० स० प्र०, पृ० 94)

**समयवज्रः**

समयवज्रोऽमोघसिद्धिः। अत्र पुनस्तत्त्वलीनः। सर्वनीवरणविष्कम्भी समयवज्रशब्देन विवक्षितः। (गु० स० प्र०, पृ० 17)

**समाजम्**

द्वयोरेकीभावः समाजम्, अक्षरार्थः। चन्द्रपद्मसमायोगं समाजम्, समस्ताङ्गम्। प्रज्ञोपाय-समायोगं समाजम्, गर्भी। संवृतिपरमार्थसत्ययोर्मीलनं समाजम्, कौलिकम्।
(गु० स० प्र०, 21-22)

**समाधिः**

समाधीयते चेतसि स्थाप्यत इति समाधिः । ( गु० स० प्र०, पृ० 115 )

**सर्षपः**

सर्षपैर्बोधिचित्तबिन्दुभिः । ( गु० स० प्र०, पृ० 192)

**सिद्धिः**

त्रिविधा सिद्धिरुत्तममध्यमाधमाः । तत्रान्तर्धानमुत्तमा, भूगतनिदानदर्शनं मध्यमा, वशीकरणमधमा सिद्धिः । ( गु० स० प्र०, पृ० 222 )

**सेवा**

बोधिलिङ्गालम्बनं सेवा । ( गु० स० प्र०, पृ० 115 )

सेव्यते मुमुक्षुभिरभ्यस्य इति सेवा । ( गु ० स० प्र०, पृ० 116 )

उत्तमसाधनस्थानां तु वज्रचतुष्कं शून्यताचतुष्टयम्, तेन सेवा कार्या। (गु० स०प्र०,पृ० 120)

**स्तम्भः**

स्तम्भो नाम देवतावेशात् पूर्वं पात्रस्य प्राकृताहङ्कारमपनीय स्तिमितभावेन काष्ठवत् स्थित्यवस्था स्तम्भनम् । ( गु० स० प्र०, पृ० 171 )

**स्तोभः**

स्तोभमुत्पतनकम्पनभ्रमणम् । ( गु० स० प्र०, पृ० 171 )

**स्वाहा**

स्वाहेति मन्त्रदेवतासमाश्वासनम् । ( गु० स० प्र०, पृ० 161 )

**हृद्वज्रः**

सर्वतथागताः प्रोक्ताः पञ्चस्कन्धा जिनैरिह ।<br>
तदात्मकायवाक्चित्तो हृद्वज्रोऽसौ महासुखः ॥<br>
( गु० स० प्र०, पृ० 13 )

●

# बौद्ध तन्त्रों में देवताओं के स्वरूप (३)

—जनार्दन पाण्डेय—

[ 'धीः' के अंक 4 और 5 में इस शीर्षक से अबतक 29 देवताओं के स्वरूप भिन्न-भिन्न ग्रन्थों से उद्धृत किये गये हैं। प्रस्तुत अंक में 10 देवताओं के स्वरूपों का निदर्शन साधनमाला, निष्पन्नयोगावली, साधनसमुच्चय एवं कृष्णयमारितन्त्र के आधार पर किया जा रहा है। ]

## 30. पद्मनर्तेश्वर

1. सत्त्वपर्यङ्कनिषण्णं द्विभुजैकमुखं रक्तं सकलालङ्कारम् अमिताभमुकुटं वामपार्श्वे पाण्डरवासिनीसमाश्लिष्टम् आलिङ्गनाभिनयस्थितवामभुजेन रक्तपद्मधरं नर्तनाभिनयेन सूचीमुद्रया विकासयदपरदक्षिणकरम्। ( साधनमाला, पृ० 75 )

2. तत्र विश्वपद्मोपरि चन्द्रे रक्तह्रीःकारेण परिणतं पद्मनर्तेश्वरं रक्तवर्णमेकमुखं जटामुकुटिनं त्रिनेत्रमष्टभुजं सर्वालङ्कारभूषितं सर्पयज्ञोपवीतिनमर्धपर्यङ्केन ताण्डवं प्रथमभुजद्वयेन नृत्याभिनयं द्वितीयदक्षिणभुजेन हृदि विकासयन्तं सूचीमुद्रां वामभुजेन रक्तपद्मं शिरसि धृतं तृतीयभुजद्वयेन वज्रवद्दण्डत्रिशूलधरं चतुर्थभुजद्वयेन अक्षसूत्रकुण्डिकाधरमष्टदेवीपरिवृतं पद्मनर्तेश्वरलोकनाथं भावयेत्। ( सा० मा०, पृ० 76 )

3. एकमुखमष्टादशभुजमर्धपर्यङ्किनममिताभजटाजूटमण्डलं सर्वकरैर्विश्वपद्मधारिणं योगिनीवृन्दपरिवृतं दक्षिणवामपार्श्वस्थिततारासुधनभृकुटीहयग्रीवं दिव्यालङ्कारवस्त्रभूषणं (पद्मनर्तेश्वराम्नायेनात्मानं विभावयेत्)। ( सा० मा०, पृ० 77 )

## 31. मञ्जुघोष

1. पूर्वोक्तबीजनिष्पन्नं श्रीमञ्जुवज्रं पञ्चवीरकशेखरं कुमारं सर्वाभरणभूषितं कुङ्कुमारुणं वामेनोत्पलं दक्षिणेन लीलया स्थितं सिंहासनस्थं चिन्तयेत्। (सा० मा०, पृ० 105)

2. द्रुतकनकनिभं द्विभुजमेकमुखं सिंहस्योपरि पद्मचन्द्रासने अर्धपर्यङ्कनिषण्णं त्रिचीरं रत्नमुकुटिनं चन्द्रप्रभामण्डलं कुमाराकाररूपिणं सर्वालङ्कारभूषितं शृङ्गाररससंयुक्तं ईषद्धसितं द्वाभ्यां हस्ताभ्यां धर्मचक्रमुद्राधरम् अपसव्यभुजासक्तप्रज्ञापारमितासहितेन्दीवरं वामजंघाश्रितयमान्तकं महाक्रोधं नीलवर्णं विकटदंष्ट्राकरालं पिङ्गलकुटिलकेशमारक्तमण्डलाक्षं भयानकं भृकुटीघोरमुखं कपालमालाविभूषितशिरसं सव्यकरेण भगवतो जङ्घावलग्नं वामे दण्डधरं (मञ्जुघोषस्वरूपं विभावयेत्)। ( सा० मा०, पृ० 107 )

3. तत्परिणामेन मञ्जुघोषस्वरूपमात्मानं पश्येत् । सिंहस्थं कनकगौरवर्णं सर्वालङ्कारभूषितं व्याख्यानमुद्राव्यग्रकरं वामपार्श्वे उत्पलधरम् अक्षोभ्यमुकुटिनं दक्षिणे सुधनकुमारं वामे च यमान्तकम् । ( सा० मा०, पृ० 109 )

## 32. मञ्जुवज्र

1. कुङ्कुमारुणसंमूर्तिर्नीलसितत्रयाननः ।
भुजद्वयसमाश्लिष्टस्वाभाविद्याधरास्यधृक् ॥
खड्गबाणभुजश्चापनीलोत्पलपरिग्रहः ।
विश्वदलाब्जचन्द्रस्थो वज्रासनशशिप्रभः ॥
(सा० मा०, पृ० 163)

2. विश्वाम्भोजचन्द्रे सत्त्वपर्यङ्कनिषण्णो भगवान् वैरोचनस्वभावो मञ्जुवज्रः कमनीयकनककान्तिः विचित्रकुसुमशोभितजटाचीरत्रयविराजितः पीतनीलशुक्लसव्येतरवक्त्रः षड्भुजो दक्षिणैः खड्गवरदबाणान् वामैः प्रज्ञापारमितापुस्तकनीलाब्जधनूंषि बिभ्राणः स्वाभवज्रधात्वीश्वरीसमापन्नः । ( निष्पन्नयोगावली, पृष्ठ 48 )

## 33. मञ्जुश्री

1. मञ्जुश्रीरूपं विभावयेत् । पीतवर्णं व्याख्यानमुद्राधरं रत्नाभरणं रत्नमुकुटिनम् अक्षोभ्याक्रान्तमौलिनं चन्द्रासनं चन्द्रप्रभं दक्षिणपार्श्वे सुधनकुमारं नानारत्नाभरणोज्ज्वलं रत्नमुकुटिन् सर्वधर्मैकपुस्तककक्षानिक्षिप्तं सम्पुटाञ्जलिपूर्वकं वामपार्श्वे यमारिः कृष्णवर्णः हुंकारबीजोद्भवः विकृताननः मुद्गरहस्तः पिङ्गोर्ध्वकेशः नानाभरणभूषितः, दक्षिणोत्तरपार्श्वे चन्द्रप्रभ-सूर्यप्रभौ पूर्वादिदिग्भागे वैरोचनरत्नसंभवामिताभामोघसिद्धयः आग्नेयादिकोणेषु लोचना मामकी पाण्डरा तारा चेति । (सा० मा०, पृ० 95)

2. भगवन्तं मञ्जुश्रियं तप्तकाञ्चनाभं पञ्चवीरकुमारकं धर्मचक्रमुद्रासमायुक्तं प्रज्ञापारमितान्वितनीलोत्पलधारिणं सिंहस्थं ललिताक्षेपं सर्वालङ्कारभूषितं श्रृङ्गारसागरतरङ्गप्रभया त्रैधातुकमापूरयन्तम् अनवरतगद्यपद्यसंस्कृतवहलानेकरुतधर्मं देशयन्तम् । (सा० मा०, पृ० 111)

3. पद्मचन्द्रासनस्थं सत्त्वपर्यङ्कमासीनं शशिप्रभमनेककिरणस्फुरणैर्व्याप्तनभःस्थलं विचित्रपरिधानं जगदानन्दस्वरूपं शुक्लवर्णं मनोरमं पञ्चचीरं महावीरं सर्वालङ्कारभूषितं दक्षिणे उद्यत्खड्गकरं वामहस्तेन हृदि गृहीतपुस्तकं मञ्जुश्रीरूपमात्मानं विभावयेत् । ( सा० मा०, पृ० 155 )

4. मञ्जुश्रीभट्टारकं रक्तगौरं पद्मचन्द्रोपरि वज्रपर्यङ्कनिषण्णं प्रथममुखं रक्तं दक्षिणं नीलं वामे शुक्लं त्रिमुखं हस्तचतुष्टयेन प्रज्ञाखड्गधनुर्बाणयोगिनं रत्नकिरीटिनं द्वात्रिंशल्लक्षणाशीत्यनुव्यञ्जनविराजितं कुमारं कुमाराभरणभूषितमात्मानं विभावयेत् । ( सा० मा०, पृ० 159 )

## 34. महाकाल

1. हुँकारतत्त्वनिष्पन्नं द्विभुजमेकवक्त्रिणम् ।
कृष्णवर्णं महाज्वालं कर्त्रिकपालधारिणम् ॥
मुण्डमालाकृतहारं दंष्ट्राभीमभयानकम् ।
खर्वरूपं महातेजं स्रवन्तं रुधिरं मुखात् ॥

(सा० मा०, पृ० 583)

2. नीलवर्णं शवारूढं प्रत्यालीढं चतुर्भुजम् ।
कर्त्रिकपालखड्गं च खट्वाङ्गधृतभास्वरम् ॥
सेनाभंजनतन्त्रेषु संग्रामायुधक्षोभणे ।
साधयेत् सविधानेन महाकालं महामतिः ॥

(सा० मा०, पृ० 591)

3. गङ्गात्मजसमारूढं प्रत्यालीढपदस्थितम् ।
खर्वं लम्बोदरं पीनं भिन्नाञ्जनसमप्रभम् ॥
ज्वलत्पिङ्गोर्ध्वकेशं च क्रुद्धनागाष्टभूषणम् ।
दंष्ट्रोत्कटललज्जिह्वं कपालावलिमस्तकम् ॥
सार्द्रनरशिरोमालापञ्चमुद्राविभूषितम् ।
व्याघ्रचर्माम्बरं भीमं त्रिनेत्रं विकृताननम् ॥
एकवक्त्रं करालास्यं षड्भुजं क्रोधविग्रहम् ।
हुँकारनादसंभूतं श्मशानाष्टकमध्यगम् ॥
वज्राङ्कर्त्रिसव्येष्वक्षस्रक्डमरुकं तथा ।
वामे कपालशूलं च वज्रपाशं तथैव च ॥
शून्यप्रभामहातिग्मं भयस्यापि भयङ्करम् ।
ज्वालामालामहाक्रोधं सर्वदुष्टनिषूदनम् ॥

(सा० मा०, पृ० 570)

4. अष्टवदनं चतुर्विंशतिनेत्रं चतुश्चरणं षोडशभुजं दक्षिणकरैः कर्त्रिवज्रगजचर्ममुद्गर-त्रिशूलखड्गयमदण्डं वामकरै रक्तपूर्णकपालं गजचर्मघण्टाङ्कुशश्वेतचामरडमरुनरशिरो दधानं शेषभुजाभ्यां प्रज्ञालिङ्गितं खर्वं कृष्णं हा हा ही ही हे हे हो हो पूरितमुखं महारौद्रं त्रिकायात्मकं पञ्चबुद्धमुकुटिनं नरमुण्डमालाभरणं भवभयङ्करम् (भगवन्तं षोडशभुजमहाकालं भावयेत्)।

(सा० मा०, पृ० 597)

## 35. योगाम्बर

सिंहोपरि विश्वाम्भोजचन्द्रेऽर्धपर्यङ्कनिषण्णो भगवान् योगाम्बरः कृष्णः कृष्णसितरक्तमूल-सव्यवाममुखत्रयः प्रतिमुखं त्रिनेत्रः षण्मुद्रो ललाटतटस्थपञ्चकपालमाली मण्यर्धचन्द्रविश्ववज्राक्रान्त-कृष्णजटाजूटस्फुरत्पञ्चतथागतमुकुटी पश्चात्स्खलितव्याघ्रचर्माम्बरः षड्भुजो वज्रघण्टाभृद्भुजाभ्यां कृष्णां शुक्लां च ज्ञानडाकिनीं पीतभुजङ्गभूषणामालिङ्गितः सव्याभ्यां स्तनबाणौ वामाभ्यामब्ज-भाजनधनुषी दधानः। ( निष्पन्नयोगावली, पृष्ठ 32 )

## 36. लोकेश्वर

### 1. त्रैलोक्यवशङ्करलोकेश्वर

लोकेश्वरं सर्वाङ्गमहारागरक्तमेकमुखं द्विभुजं त्रिनेत्रं जटामुकुटमण्डितं वज्राङ्कितपाशाङ्कुश-हस्तं रक्तपद्मे वज्रपर्यङ्कनिषण्णं दिव्याभरणवस्त्रविभूषितं त्रिभुवनमेषद्वये पाशबद्धवज्रोपरि स्थिता-भिर्नानानिर्माणधारिणीभिः वज्रयोगिनीभिर्दत्ताभिषेकं बोधिसत्त्वैः नानाभरणयुक्तैः कृतपूजम्—

( सा० मा०, पृ० 80 )

### 2. रक्तलोकेश्वर

दक्षिणोत्तरपार्श्वे ताराभृकुटीदेवीद्वयसहितं आर्यावलोकितेश्वरभट्टारकं रक्तवर्णं रक्तमाल्या-म्बरानुलेपनं पाशाङ्कुशधनुर्बाणधरं चतुर्भुजं शृङ्गारैकरसं रक्तकुसुमवताशोकतरोरधस्तादवस्थितम्।

( सा० मा०, पृ० 83)

### 3. वश्यलोकेश्वर

आर्यावलोकितेश्वरं रक्तवर्णमभिताभगर्भजटामुकुटधरं वामकरगृहीतरक्तपद्मं दक्षिणकरेण विकासयन्तं विविधालङ्कारेण विभूषितम्। ( सा० मा०, पृ० 84 )

### 4. नीलकण्ठार्यावलोकितेश्वर

भगवन्तं पीतवर्णमर्धचन्द्राङ्कितजटामुकुटिनम् अमिताभोपलक्षितशिरःप्रदेशं रक्तपद्मोपरि-स्थितं कृष्णसारहरिणचर्मणि वज्रपर्यङ्किनं समाधिमुद्रोपरि नानारत्नपरिपूर्णकपालधारिणम् ऐणेय-चर्मकृतयज्ञोपवीतिनं व्याघ्रचर्माम्बरधरं निराभरणं नीलकण्ठं नीलगुलिकाविशिष्टकण्ठं पार्श्वद्वये परस्पराभिसंबद्धपुच्छसमणिफणाविशिष्टभगवदवलोकनपरोर्ध्वमुखकृष्णसर्पोपलक्षितम्।

( सा० मा०, पृ० 85-86 )

### 5. मायाजालक्रमार्यावलोकितेश्वर

भगवन्तमार्यावलोकितेश्वरं कृष्णवर्णं प्रत्यालीढस्थं सूर्यमण्डलस्थितं पञ्चमुखं त्रिनेत्रं द्वादशभुजं सितरक्तदक्षिणमुखद्वयं पीतहरितवाममुखद्वयं दक्षिणभुजैः डमरुखट्वाङ्गाङ्कुशपाशवज्रशरधरं

वामभुजैस्तर्जनीकपालरक्तकमलमणिचक्रचापधरं दंष्ट्राकरालसकलवदनं षण्मुद्रोपेतं सार्द्रमुण्डमाला-लङ्कृतशरीरं नग्नं सर्वाङ्गसुन्दरं प्रत्याकलय्य— ( सा० मा०, पृ० 86-87 )

### 6. सुगतिसंदर्शनलोकेश्वर

शुक्लह्रीःकारोद्भवं सुगतिसन्दर्शनं लोकेश्वरभट्टारकं शुक्लवर्णं षड्भुजं वरदाभयाक्षमाला-धरं दक्षिणे वामे पद्मकुण्डीत्रिदण्डीधरं च रत्नाभरणभूषितं व्रतसूत्रधारिणं जटामुकुटं पद्मोपरि चन्द्रमण्डलस्थितं सौम्यरूपं भावयेत् । ( सा० मा०, पृ० 88 )

### 7. प्रेतसन्तर्पितलोकेश्वर

श्वेतह्रीःकारोद्भवं जटामुकुटिनं षड्भुजं प्रथमभुजद्वयेन वरदौ द्वितीयभुजद्वयेन रत्नपुस्तकौ तृतीयभुजद्वयेन अक्षमालात्रिदण्डिकं सर्वालङ्कारभूषितं व्रतसूत्रधारिणं सौम्यमूर्तिं श्वेतवर्णं विभावयेत् । ( सा० मा० पृ० 89 )

## 37. वज्रभैरव

श्रीवज्रभैरवं नवमुखं महिषरूपं षोडशपादं चतुस्त्रिंशद्भुजं नग्नं कृष्णवर्णं महातेजसं कपालमालालङ्कृतशेखरं महाभयानकम् ऊर्ध्वलिङ्गं प्रत्यालीढं बृहदुदरं महाकायम् ऊर्ध्वकेशं ज्वलद्भासुराकारं कपालमालाभरणभूषितं महाप्रलयकालमिव गर्जन्तं नररुधिरवसासृङ्मांसमेदोमज्जा भक्षयन्तं सब्रह्मेन्द्रोपेन्द्ररुद्रादीन् त्रैलोक्यं खादयन्तं, अट्टहासं ललज्जिह्वं भयस्यापि भयङ्करम् । प्रथमं महिषमुखं दक्षिणशृङ्गे त्रीणि मुखानि नीलरक्तपीतानि क्रुधा विवृतास्यानि । वामे सितधूम्र-कृष्णानि, तयोर्मध्ये सुरक्तं गलद्रुधिरास्यं तदुपरि मञ्जुश्रीरूपं सुपीतमीषत्क्रुद्धं बालाभरणं पंचचीरक-शेखरं कुमारं, दक्षिणप्रथमभुजे कर्तिका द्वितीये भिन्दिपालं तृतीये मुशलं चतुर्थे छुरिका पंचमे कुणपः षष्ठे कुठारः सप्तमे कुन्तं अष्टमे शरः नवमे अङ्कुशं दशमे गदा एकादशे खट्वाङ्गः द्वादशमे चक्रं त्रयोदशमे वज्रं चर्तुदशमे वज्रमुद्गरं पचदशमे खड्गं षोडशमे डमरुं वामे प्रथमे कपालं द्वितीये शिरः तृतीये फेतकं चतुर्थे पादः पंचमे पाशं षष्ठे धनुः सप्तमे अस्त्रं अष्टमे घण्टा नवमे करं दशमे श्मशानकर्पटम् एकादशमे शूलभिन्नपुरुषं द्वादशे अग्निकुन्दं त्रयोदशे चषकं चतुर्दशे तर्जनी पंचदशे त्रिपताका षोडशे वाटकर्पटं द्वाभ्यां हस्ताभ्यां गजचर्मधृक्, दक्षिणपादे नरमहिषवृषभखर-उष्ट्रश्वान-मेषशृगालाः वामपादे गृद्ध-उलूककाकगरुडसेना मंत्री महाशकुनसारसाः तस्याधो महाश्मशानं राक्षसक्षेत्रपालवेतालान्वितं शूलभिन्नपुरुषं वटवृक्षोद्बद्ध पुरुषं कुन्तभिन्नं च अनेकपक्षिस्वानयुतं हाहा-कारसमाकुलम्, एवं विभावयेद्योगी सर्वक्रूरकर्मसिद्धिकरम् । ( साधनसमुच्चय, पत्र 53-54 )

## 38. वैरोचन

कूटागारमध्ये सिंहोपरि विश्वाम्भोजकर्णिकायां भगवान् वैरोचनो वज्रपर्यङ्केन निषण्णः

शुभ्रः सूर्यप्रभः स्फुरत्पञ्चबुद्धरत्नमुकुटजटाविटपी विचित्ररत्नाभरणाम्बरः शान्तः सितपीतरक्तहरित-चतुर्वक्त्रोऽष्टभुजः सव्यवामाभ्यां धृतसवज्रबोध्यङ्गीमुद्रोऽपराभ्यां धृतध्यानमुद्रो दक्षिणाभ्यामक्ष-मालाशरधरो वामाभ्यां चक्रचापभृत् । अथवा शुक्लैकमुखः सवज्रबोध्यङ्गी मुद्राभृद्भुजद्वयः ।

( वामे वज्रमुष्ट्यास्तर्जन्या उत्थिताया दक्षिणे वज्रमुष्टिना ग्रहणे सति बोध्यङ्गीमुद्रा । )

( निष्पन्नयोगावली, पृ० 44 )

## 39. हेरुक

--भगवन्तं श्रीहेरुकमात्मानं पश्येत् ।

आस्फालयन्तं चरणांस्तर्जयन्तं सुरासुरान् ।<br>
क्रुद्धं वर्तुलरक्ताक्षं ललितं नवयौवनम् ॥<br>
चतुश्चरणमष्टास्यं द्विरष्टभुजभूषितम् ।<br>
चतुर्मारसमाक्रान्त-अर्धपर्यङ्कताण्डवम् ॥<br>
मुण्डमालामहाहारं विस्कम्भितभीषणम् ।<br>
विश्ववज्रधरं मूर्ध्नि कृष्णसूर्यज्वलत्प्रभम् ॥<br>
हुंकारस्फारिवदनं भस्मोद्धूलितविग्रहम् ।<br>
मूलाननं महाकृष्णं दक्षिणं कुण्डसन्निभम् ॥<br>
वामरक्तं महाघोरं मूर्धास्यं विकरालिनम् ।<br>
भृङ्गसन्निभमेषास्यं प्रतिवक्त्रत्रिलोचनम् ॥<br>
शृङ्गारवीरबीभत्सरौद्रहास्यभयानकैः ।<br>
करुणाद्भुतशान्तैश्च नवनीलघनद्युतिम् ॥<br>
पिङ्गोर्ध्वकेशमूर्धानं पञ्चबुद्धैरलङ्कृतम् ।<br>
चक्रोकुण्डलकंठी च हस्ते रुचकमेखलम् ॥<br>
हस्ते सस्वरगावोष्ट्र········व पालकम् ।<br>
नैरात्म्यया समापन्नं स्वाभया पञ्चमुद्रया ॥<br>
द्विभुजैकमुखी द्व्यङ्घ्रिः सा तु कर्तिकपालभृत् ॥

( कृष्णयमारि तन्त्र टीका पत्र 105-106)

2. ततो ह्रीःकारनिष्पन्नं नीलकरालवज्रं ह्रीःकाराधिष्ठितवरटके ध्यात्वा तत्सर्वपरिणतं नीलं नरचर्मभृतं कपालमालाऽक्षोभ्यालङ्कृतशिरस्कं ज्वलदूर्ध्वपिङ्गलकेशं रक्तवर्तुलाक्षम् अन्त्रसंग्रथित-मुंडमालावलम्बितं नरास्थिरचिताभरणं द्विभुजैकमुखं दंष्ट्राकरालवदनं दक्षिणकरेण वज्रधारिणं

वामकरेण पूर्णकपालं वामस्कन्धासक्तचलद्घण्टिकापताकानरशिरो विश्ववज्रालङ्कृतपञ्चसूचिक वज्रशिखरमध एकसूचिकवज्राकारं यज्ञोपवीतवत्खट्वाङ्गं विश्वपद्मसूर्ये वामपादं तस्यैवोरौ दक्षिण-चरणं विन्यस्य नृत्यं कुर्वन्तं हेरुकवीरं भावयेत् ॥ ( सा० मा०, पृ० 469 )

3. चन्द्रवज्राकारपरिणतं जिननिवहमन्यूद्भवश्रीकरुणाचलक्रोधं हेरुकाख्यम् अधोमुखस्य शवस्योपरि विश्वपद्मं तस्योपरि सूर्यमण्डलं तन्मध्ये समुपविष्टम् अर्धपर्यङ्किनं भस्मोद्धूलितरक्तप्रभा-मालिनं पिंगलोर्ध्वकेशम् अक्षोभ्याद्यलङ्कृतकपालमालामुकुटिनं दक्षिणकरेण त्रिपताकागृहीतनील-करालवज्रं वामस्कन्धावसक्तवज्रखट्वाङ्गं रक्तपरिपूर्णकपालवामकरं सार्द्रनरमस्तकमालाकृतस्रग्दाम दंष्ट्राकरालवदनं चलद्वर्तुलाकाररक्ताक्षं सविभ्रमभृकुटिनं वाच्यं विचारशून्यत्वात् संवृत्या स्वप्नसौदा-मनीगन्धर्वनगरच्छायामायोपमं चतुर्मुद्रामुद्रितम् । ( सा० मा०, पृ० 470 )

4. श्रीहेरुकरूपैः सकलजगदर्थं कृत्वा तत्रैव प्रवेश्य तत्परिणतं श्रीहेरुकं विश्वदलकमलस्थितं-शवोपरि सूर्यमण्डलस्थं द्विभुजं त्रिनेत्रं दक्षिणकरे वज्रं वामे वज्राङ्कितकपालधरं सताण्डवं व्याघ्र-चर्मनिवसनं शिरस्यक्षोभ्यात्मकनरशिरोघटितचक्रीधरं कर्णे अमिताभात्मकनरास्थिकुण्डलिनं कण्ठे रत्नसम्भवात्मककण्ठिकायुक्तं हस्ते वैरोचनात्मकरुचकधरं कट्याममोघसिद्धयात्मकमेखलायुतं केशयज्ञोपवीतकेयूरनूपुरैर्युक्तं ऊर्ध्वपिङ्गलकेशं द्विभुजैकमुखया कर्तिकपालधारिण्या नैरात्म्ययाऽऽ-लिङ्गितम् एवंभूतमात्मानं विभाव्य । (सा० मा०, पृ० 475)

5. मध्यबिन्दूद्भवं नीलं हुँबीजात् करुणामयम् ।
पञ्चज्ञानत्रिकायात्मपरमानन्दसुन्दरम् ॥
चतुर्मुखं चतुर्बाहुं भस्मोद्धूलितमस्य च ।
मूलं शरीरवन्नीलं मुखं पीतं तु दक्षिणम् ॥
पृष्ठतः सितरक्ताभं वामं मरकतोज्ज्वलम् ।
त्रिनेत्रं नरचर्मादिमुद्रापञ्चकभूषितम् ॥
पिंगोर्ध्वमूर्धजाक्षोभ्यं कपालमुकुटोत्कटम् ।
कपालपाणिनं सव्ये वामे खट्वाङ्गपाणिनम् ॥
रश्मिकोटिस्फुरच्चित्रबुद्धैः कृतजगद्धितम् ।
स्वाभया बुद्धडाकिन्या संश्लिष्टं वा रतोत्सवे ॥
नृत्यन्तं हेरुकं ध्यायात् चतुर्देवीक्षितराननम् ।

(सा० मा०, पृ० 48४)

# सप्तविधालंकाराख्यायिका न्याय

—व्रजवल्लभ द्विवेदी—

[ चन्द्रकीर्ति ने अपनी टीका में तीन बार (पृ० 5,216 ,229 ) सप्तविधालंकाराख्यायिका न्याय का उल्लेख किया है । पृ० 2 से 5 तक यहाँ किसी व्याख्यातन्त्र के आधार पर सातों अलंकारों के लक्षण दिये गये हैं और पृ० 6 से 11 तक षट्कोटिपद विभाग तथा चतुर्विधाख्यायिका विभाग को गुह्यसमाज के प्रत्येक पटल में से कुछ वचनों को उद्धृत कर समझाया गया है । चन्द्रकीर्ति स्थान-स्थान पर अपनी व्याख्या में अन्यत्र भी इन अर्थों के साथ अनेक विषयों की सूचना देते हैं । प्रस्तुत निबन्ध में इन सब पर प्रकाश डालने का प्रयास किया गया है । ]

चिर प्रतीक्षा के बाद गुह्यसमाज तन्त्र की आचार्य चन्द्रकीर्ति कृत प्रदीपोद्योतन नाम की षट्कोटिपद व्याख्या अब प्रकाशित होकर उपलब्ध होने लगी है। इसका सम्पादन तन्त्रशास्त्र के प्रसिद्ध विद्वान् प्रोफेसर चिन्ताहरण चक्रवर्ती ने किया था। ग्रन्थ के प्रकाशन से पूर्व ही उनके स्वर्गीय हो जाने के कारण इसकी विद्वत्तापूर्ण भूमिका डॉ० सुनीतिकुमार पाठक ने लिखी है।

चन्द्रकीर्ति ने अपनी टीका में तीन बार ( पृ० 5, 216, 229 ) सप्तविधालंकाराख्यायिका न्याय का उल्लेख किया है। पृ० 2 से 5 तक यहाँ किसी व्याख्यातन्त्र के आधार पर सातों अलंकारों के लक्षण दिये गये हैं और पृ० 6 से 11 तक षट्कोटिपद विभाग तथा चतुर्विधाख्यायिका विभाग को गुह्यसमाज के प्रत्येक पटल में से कुछ वचनों को उद्धृत कर समझाया गया है। चन्द्र-कीर्ति स्थान-स्थान पर अपनी व्याख्या में अन्यत्र भी इन अर्थों की चर्चा करते हैं। इस विषय की विस्तार से चर्चा करने से पहले हम चन्द्रकीर्ति के इस ग्रन्थ की कुछ विशेषताओं की ओर ध्यान आकृष्ट करना चाहते हैं ।

अपने ग्रन्थ के आरम्भ और अन्त में चन्द्रकीर्ति आचार्य नागार्जुन को आदर के साथ स्मरण करते हैं। लंकावतारसूत्र[1] के प्रमाण से वे इनको दक्षिणापथ का भिक्षु मानते हैं और इन्हीं

1. "दक्षिणापथवैदल्यां भिक्षुः श्रीमान् महायशाः । श्रीनागार्जुननामा च सदसत्पक्षदालकः ॥ प्रकाश्य लोके मद्यानं महायानमनुत्तमम् । आसाद्य भूमिं मुदितां यास्यतेऽसौ सुखावतीम् ॥" ( पृ० 229 )। स्वल्प पाठान्तर के साथ ये दोनों श्लोक लंकावतारसूत्र ( 10.165–166 ) में उपलब्ध हैं। यहाँ "दक्षिणापथवैदल्याम्" पाठ है या "दक्षिणापथदेहल्याम्"—इसकी समीक्षा प्राचीन हस्तलेखों तथा चीनी-तिब्बती अनुवादों की सहायता से होनी चाहिये । वेदली शब्द के अर्थ पर भी हमें गंभीरता से विचार करना होगा ।

को वज्रयान की महायोग तन्त्र-परम्परा का प्रवर्तक भी मानते हैं। वे कहते हैं कि गुरु-परम्परा से यह ज्ञान हमें प्राप्त हुआ है, साक्षात् नहीं ( पृ० 229 )। स्पष्ट है कि चन्द्रकीर्ति के मत से शून्यवाद के महान् आचार्य नागार्जुन ही इसके प्रवर्तक हैं। गुह्यसमाजतन्त्र को वे वज्रयान के महायोगतन्त्र विभाग में रखते हैं। मंगलाचरण के बाद चन्द्रकीर्ति पाँच क्रमों का उल्लेख करते हैं। स्पष्ट है कि यहाँ उनको नागार्जुन का पंचक्रम अभिप्रेत है। इनमें उत्पत्तिक्रम पहला और चित्तनिध्यप्ति[1] दूसरा क्रम है। तीसरे और चौथे क्रमों का नाम न देकर यहाँ उनके लक्षण दिये गये हैं। नागार्जुन के पंचक्रम[2] में इनके नाम स्वाधिष्ठान क्रम और अभिसम्बोधि क्रम हैं। पांचवाँ युगनद्ध क्रम है। यहाँ बताया गया है कि तन्त्रशास्त्र का ज्ञाता वही हो सकता है, जो कि इन क्रमों की विस्तार और संक्षेप में जानकारी रखता हो[3]। ऐसे तन्त्रज्ञ को पाँच पिण्डार्थों[4] का ज्ञान प्राप्त कर लेने के बाद षट्कोटि में प्रवेश करना चाहिये[5]।

पंचक्रम के प्रारम्भ में नागार्जुन लिखते हैं कि ( गुह्य ) समाजतन्त्र के षट्कोटि अर्थ को भलीभाँति समझकर मैं पिण्डीक्रम का वर्णन कर रहा हूँ[6]। इससे स्पष्ट हो जाता है कि नागार्जुन और चन्द्रकीर्ति दोनों को इस तन्त्र की गहरी जानकारी थी।

---

1. तिब्बती परम्परा के अनुसार नागार्जुन के मत में निष्पन्नक्रम के अन्तर्गत ही वज्रजाप, चित्तविवेक, मायाकाय, प्रभास्वर और युगनद्ध नामक पांच क्रम माने जाते हैं। आर्यदेव निष्पन्नक्रम के अन्तर्गत काय, वाक्, चित्त, मायाकाय, प्रभास्वर और युगनद्ध नामक छः भेद मानते हैं। चन्द्रकीर्ति के अनुसार सम्पूर्ण अनुत्तर तन्त्र की साधना पहले उत्पत्तिक्रम में और बाद में निष्पन्नक्रम में विभक्त होती है। निष्पन्नक्रम में ये चित्तनिध्यप्ति ( काय, वाक्, चित्त का विवेक ), मायाकाय, प्रभास्वर और युगनद्ध नामक चार क्रमों का समावेश करते हैं। प्रस्तुत स्थल में चित्तनिध्यप्ति शब्द का यही अर्थ ग्रहण करना चाहिये।
2. नागार्जुन के समय और जन्मस्थान के विषय में "सम्यग् वाक्" ( के० उ० ति० शिक्षा शोध संस्थान पत्रिका ) के द्वितीय अंक के पृ० 124-138 पर प्रकाशित प्रो० कृष्णनाथ का "नागार्जुन का काल" शीर्षक निबन्ध देखना चाहिये।
3. "एषां क्रमाणां भेदांस्तु प्रस्तारविधिना बहून्। संमीलनं च तेषां वै यो वेत्ति स हि तन्त्रवित्॥" ( गु० प्र०, पृ० 1 )।
4. "मन्त्राच्चित्तादतः कायाद् विशुद्धेर्योगवाहतः। क्रमशः पञ्चपिण्डार्थान् ज्ञात्वा षट्कोटिमाविशेत्॥ ( गु० प्र०, पृ० 1 )।
5. सन्ध्यायभाषा न च सन्ध्याभाषं नेयार्थमर्थं न च नेयमर्थम्। यथारुतं नैव यथारुतं च षट्कोटिकार्यं खलु तन्त्रशास्त्रे॥" (गु० प्र०, पृ० 10)। आगे इसका पूरा विवरण दिया गया है।
6. श्रीमत्समाजतन्त्रस्य षट्कोटयर्थावबोधतः।
   पिण्डीक्रममहं वक्ष्ये सर्वसत्त्वहितोदयम्॥ ( प० क्र०, 1. 2 )।

पंचक्रम के टिप्पणीकार पण्डित परहितरक्षित पिण्डीक्रम का कायविवेक में, वज्रजाप क्रम का वाग्विवेक में और स्वाधिष्ठान क्रम का चित्तविवेक में उपयोग मानते हैं। सर्वशुद्धिविशुद्धि क्रम का भी चित्तविवेक में ही उपयोग बताया गया है, किन्तु अनुत्तरसन्धि नाम के इस प्रकरण के कर्ता शाक्यमित्र हैं, नागार्जुन[1] नहीं। इस व्याख्या के अनुसार चन्द्रकीर्ति के उत्पत्तिक्रम का हम पिण्डीक्रम में समावेश कर सकते हैं। दूसरे क्रम का नाम यहाँ चित्तनिध्यप्ति दिया गया है। यह नागार्जुन के वज्रजाप क्रम का द्योतक है। वहाँ बताया गया है—"वज्रजापस्थितो योगी चित्तनिध्यप्तिमाप्नुयात्" ( 2.5 )। स्पष्ट है कि चन्द्रकीर्ति के सामने नागार्जुन का पंचक्रम विद्यमान था।

प्रस्तुत व्याख्या में निम्न ग्रन्थ उद्धृत हैं—

| नाम | पृष्ठसंख्या[2] |
|---|---|
| असाधारणगुह्यमहायोगतन्त्र | 12 |
| *आर्षव्याख्यान | 43–44, 48, 49–50, 63, 76–77, 83–85, 107 |
| *कर्मान्तविभाग | 118 |
| गुह्यसमाज | 29, 223, 229 |
| *गुह्येन्द्रतिलक | 79 |
| तत्त्वसंग्रह | 186, 188, 191 |
| देवेन्द्रपरिपृच्छा | 12–13 |
| प्रज्ञासूत्र | 208 |
| महामहायानरत्नराजसूत्र | 216 |
| महायानसूत्र | 57 |
| *मायाजालमहातन्त्रराज | 47, 119, 216 |
| *मूलतन्त्र | 208 |
| लङ्कावतारसूत्र | 229 |
| *लाक्षी भट्टारिका | 216 |

| नाम | पृष्ठसंख्या |
|---|---|
| *वज्रपातालतन्त्र | 205 |
| *वज्रमाला (महायोग) तन्त्र | 14–17, 27–28 30–31, 56, 57, 70, |
| *वज्रामृत | 149 |
| *वज्रोष्णीषतन्त्र | 70, 143, 151 |
| वैरोचनाभिसंबोधि ( चर्या ) तन्त्र | 60, 81, 119 |
| *व्याख्यातन्त्र | 2, 4–5, 10, 13, 25, 27, 37, 39–40, 45, 47–48, 52–54, 58, 60–61, 66, 142–143 |
| समाज | 2, 10, 17, 189 |
| समाजोत्तर | 5, 56, 116–117, 120 |
| सम्बर ( तन्त्र ) | 20, 64 |
| साधनोपायिका | 27 |
| *सन्ध्याव्याकरण ( व्याख्या ) तन्त्र | 11, 19, 70 |

---

1. गुह्यादि-अष्टसिद्धिसंग्रह का उपोद्घात ( पृ० 29, टि० 3 ) देखिये।
2. परिशिष्ट में दी गई उन पृष्ठसंख्याओं को यहाँ नहीं दिया गया है, जिनमें वे वचन नहीं मिलते।

